च्छाखेशाः स्युर्जीवशुक्रारसौम्याः ॥ ४३ ॥

( अन्वयः ) भार्गवेज्यौ विप्राधीशौ स्तः कुजार्कौ राजन्यानां अधिपौ भवतः, औषधीशश्चन्द्रः च पुनः विशां अधिपः स्यात् ज्ञः शूद्राणामधिपः स्यात् च पुनः शनिः, अन्त्यजानां अधिपः स्यात् जीवशुक्रारसौम्याः शाखेशाः स्युरिति ॥ ४३ ॥

अर्थः—शुक्र बृहस्पति ब्राह्मणोंके स्वामी है, मंगल सूर्यक्षत्रियके स्वामी हैं, चन्द्रमा वैश्योंका स्वामी है बुध शूद्रोंका स्वामी है। शनि नीचोंका स्वामी है। गुरु ऋग्वेद का स्वामी है। भौम सामका स्वामी हैं और बुध अथर्व का स्वामी है ॥ ४३ ॥

वर्णेश और शाखेशके अधिपतिका प्रयोजन—

शाखेशवारतनुवीर्यमतीव शस्तं
शाखेशसूर्यशशिजीवबले व्रतं सत् ।
जीवे भृगौरिपुगृहे विजिते च नीचे
स्याद्वेदशास्त्रविधिना रहितो व्रतेन ॥ ४४ ॥

( अन्वयः ) शाखेशवारतनुवीर्यं अतीव शस्तं स्यात् शाखेशसूर्यशशिजीवबले व्रतं सत् स्यात् । जीवे भृगौ रिपुगृहे विजिते च पुनः नीचे तदा व्रतेन वेदशास्त्रविधिना रहितः स्यात् ॥ ४४ ॥

अर्थः—जो अपना शाखाधिप हो उसका वार लग्न गोचर प्रकारसे बलये हों तब यज्ञोपवीतमें श्रेष्ठ है। जैसे ऋग्वेदियोंका गुरुवारमें धन मीन लग्नमें गुरुबल हो तो यज्ञोपवीत अत्यंत शुद्ध है और गुरु भृगु शाखेश वर्णेश रिपुस्थानमें हों युद्धमें पराजित हों नीच राशिमें हों तो यज्ञोपवीत करने से बालक शास्त्र से विमुख रहे ॥ ४४ ॥

जन्ममास आदिकोंके प्रसंगमे पुनः विधान—

जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ।
आद्यगर्भेऽपि विप्राणां क्षत्रादीनामनादिमे ॥ ४५ ॥

( अन्वयः ) विप्राणामाद्यगर्भेऽपि जन्मर्क्षमासलग्नादौ व्रते सति व्रती जनो विद्याधिकः स्यात् । क्षत्रादीनामनादिमे गर्भे व्रते सति विद्याधिकः स्यादिति ॥ ४५ ॥

अर्थः-जन्मनक्षत्रमे, जन्ममासमें,जन्मलग्नमें,ब्राह्मणोंके ज्येष्ठ बालकका और द्वितीय आदि बालक का यज्ञोपवीत हो तो विद्यामें निपुण हो, क्षत्रिय वैश्यके दूसरे आदि गर्भके बालकका जन्म नक्षत्र आदिमें यज्ञोपवीत हो तो व्रतवाला विद्वान् हो ॥ ४५ ॥

व्रतबन्धमें बालकका गुरुबल-

वटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः ।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयान्यत्र निंदितः ॥ ४६ ॥

( अन्वयः ) गुरु वटुकन्या जन्मराशेः त्रिकोणायद्विसप्तगः श्रेष्ठः स्यात् खषट्त्र्याद्ये तदा पूजया सन् स्यात् अन्यत्र निन्दितो भवतीति ॥ ४६ ॥

अर्थः-वटु और कन्याकी जन्म राशिसे नवां पांचवां ग्यारहवां दूसरा सातवां इन स्थानों गुरु श्रेष्ठ है और दशवां छठां तीसरा प्रथम इन स्थानोंमें पूजा करने से श्रेष्ठ है । अन्य स्थानों मे निन्दित है ॥ ४६ ॥

गुरु दुष्ट होने से अपवाद-

स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः ।
रिःफाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसत् ॥४७॥

( अन्वयः ) गुरुः स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे रिष्फाष्टतुर्यगः अपि इष्टः स्यात् नीचारिस्थो गुरुः शुभोऽप्यसत् स्यात् ॥ ४७ ॥

अर्थः-चतुर्थ आदि निन्द्य स्थानोंमें स्थित गुरु कर्कपर स्थित हो वा धन मीन पर हो वा मेष सिंह वृश्चिक पर हो वा धन मीनके नवांशपर हो वा वर्गोत्तम में हो तो शुभ फलका देनेवाला होता है और मकर राशिका और शत्रुकी राशि बृहस्पति अशुभ है ॥ ४७ ॥

व्रतबन्धमें वर्ज्य मुहूर्त-

कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके ।
प्राक्संध्यागर्जिते नेष्टो व्रतबंधो गलग्रहे ॥ ४८ ॥

[अन्वयः] कृष्णे कृष्णपक्षे प्रदोषे, अनध्याये निशि रात्रौ अपराह्णे प्राक्संध्यागर्जिते सति तथा गलग्रहेपि व्रतबन्धो नेष्टो भवति ॥ ४८ ॥

अर्थः-प्रथ त्रिभागरहित कृष्णपक्षमें, प्रदोषमें, अनध्यायमें शनिवारमें रात्रिमें

दिनके तीसरे तृतीयांशमें, प्रातः कालके गर्जनमें तथा गलग्रहमें व्रतबन्ध उत्तम नहीं ॥ ४८ ॥

रवि आदिकों का अंशफल–

क्रूरो जडो भवेत्पापः पटुः षट्कर्मकृद्वटुः ।
यज्ञार्थभाक् तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥ ४९ ॥

[अन्वय.] रव्याद्यंशे तनौ क्रमात् वटुः षट्कर्मकृत् स्यात् । तथा यज्ञार्थभाक् मूर्खो भवेदिति ॥ ४९ ॥

अर्थः—जन्ममें रवि आदिकोंका अंश हो तो क्रूर, जड़, पापी चतुर, षट्कर्मी, यज्ञार्थ जने वाला, मूर्ख यह फल क्रमसे कहना ॥ ४९ ॥

स्वनवांशमें चन्द्रनवांश का फल–

विद्यानिरतः शुभराशिलवे पापांशगते हि दरिद्रतरः ।
चंद्रे स्वलवे बहुदुःखयुतः कर्णादितिभे धनवान्स्वलवे ॥ ५० ॥

( अन्वयः ) शुभराशि लवे चन्द्रे तदा व्रता विद्यानिरतः स्यात् पापांशगते चन्द्रे हि निश्चयेन दरिद्रतरः स्यात् स्वलवे दुःखयुतः स्यात् स्वलवे कर्णादितिभे तदा धनवान् भवेदिति ॥ ५० ॥

अर्थः-शुभ राशिके नवांशमें चन्द्रमा होवे तो बालक विद्या सीखे । क्रूरग्रहके नवांशमें चन्द्रमा होवे तो दरिद्री होय । कर्कका नवांश हो तो अत्यन्त दुःखी हो श्रवण और पुनर्वसु नक्षत्र हों और चन्द्रमा अपने नवांशकमें हो तो यज्ञोपवीत करने से वह धनवान होता है ॥ ५० ॥

केंद्र स्थानमें स्थित सूर्यादिकों का फल–

राजसेवी वैश्यवृत्तिः शस्त्रवृत्तिश्च पाठकः ।
प्राज्ञोऽर्थवान् म्लेच्छसेवी केंद्रे सूर्यार्किखेचरैः ॥ ५१ ॥
शुक्रे जीवे तथा चंद्रे सूर्यभौमार्किसंयुते ।
निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युते पटुः ॥ ५२ ॥

[ अन्वयः ] शुक्रे जीवे तथा चन्द्रे सूर्यभौमार्किसंयुते सति निर्गुणः स्यात् क्रूरचेष्टः स्यात् निर्घृणः स्यात् सद्युते सति पटुर्भवेत् ॥ ५१ ॥

अर्थः-सूर्यादि ग्रह केंद्रमें हों तो क्रमसे यह फल कहना-राजसेवा करे, वैश्यका कार्य करे, शस्त्रवृत्तिवाला हो, पढावे, पंडित हो धनी हो, म्लेच्छ की सेवा करै ॥ ५ ॥ शुक्र बृहस्पति चन्द्रमा ये ग्रह सूर्य मंगल शनैश्चरसे युक्त हों तो गुणशून्य, क्रूरचेष्टा वाला, दया रहित हो और ये शुभ युक्त हों तो चतुर होय ॥ ५३ ॥

योग विशेषसे अन्य फल-

विधौ सितांशगे सिते त्रिकोणगे तनौ गुरौ ।
समस्तवेदविद्व्रती यमांशगेऽतिनिर्घृणः ॥५३॥

[ अन्वयः ] विधौ सितांशगे सिते त्रिकोणगे गुरौ तनौ लग्नस्थे सति व्रती समस्तवेदवित् स्यात् यमांशगे अतिनिर्घृणः स्यादिति ॥ ५३ ॥

अर्थः-चन्द्रमा शुक्रके नवांशमें हो शुक्रत्रिकोणमें हो और बृहस्पति लग्नमें हो तो व्रती संपूर्ण वेदों का जानने वाला होवे और शनिके नवांशकमें चंद्रमा हो, लग्नमें गुरु हो, शुक्रत्रिकोण में हो तो भी बालक कृतघ्न हो ॥ ५३ ॥

अनध्यायका विचार—

शुचिशुक्रपौषतपमां दिगश्विरुद्रार्कसंख्यसिततिथयः ।
भूतादित्रितयाष्टमीसंक्रमणं च व्रतेष्वनध्यायाः ॥५४॥

[ अन्वयः ] शुचिशुक्रपौषतपसान् दिगश्विरुद्रार्कसंख्यसिततिथयः भूतादित्रितयाष्टमी च पुनः संक्रमण एते व्रतेषु अनध्याः स्युः ॥

अर्थ.-आषाढ शुक्ल दशमी ज्येष्ठ शुक्ल द्वितीया, पौषशुक्ल एकादशी, माघ शुक्ल द्वादशी और चतुर्दशी पूर्णिमा अमावस्या प्रतिपदा अष्टमी संक्रांतिदिन ये यज्ञोपवीतमें अनध्याय हैं ॥ ५४ ॥

प्रदोषका लक्षण-

अर्कतर्कत्रितिथिषु प्रदोषः स्यात्तदग्रिमैः ।
रात्र्यर्धसार्धप्रहरयाममध्यस्थितैः क्रमात् ॥ ५५ ॥

[ अन्वयः ] रात्र्यर्धसार्द्धप्रहरयाम्यमध्यस्थितैस्तदग्रिमैः क्रमात्, अर्कतर्कत्रितिथिषु प्रदोषः स्यात् इति ॥ ५५ ॥

अर्थः-द्वादशीमें अर्धरात्रिसे पहले त्रयोदशी आवे तो प्रदोष जानना, छठमें

डेढ प्रहर रात जानेके पहले सप्तमी आवे तो प्रदोष कहना तृतीयामें प्रहरभर रात जानेके पहले चतुर्थी आवे तो प्रदोष जानना यह क्रम है ॥ ५५ ॥

ऋग्वेदियोंका ब्रह्मौदनसंस्कार विचार–

प्राग्ब्रह्मौदनपाकाद्व्रतबंधानंतरं यदि चेत् ।
उत्पातानध्ययनोत्पत्तावपि शांतिपूर्वकं तत्स्यात् ॥ ५६ ॥

[ अन्वयः ] ब्रह्मौदनपाकाद् प्राक् व्रतबन्धानन्तरं यदि चेत् उत्पातानध्ययनोत्पत्तौ अपि तदा तत् शान्तिपूर्वकं स्यात् इति ॥ ५६ ॥

अर्थः–ब्रह्मौदन पाकसे पहले और यज्ञोपवीतके अनंतर यदि उत्पात अनध्याय होवे तो भी शांतिपूर्वक ब्रह्मौदनपाक करना ॥ ५६ ॥

वेद विशेषसे नक्षत्र विशेष–

वेदक्रमाच्छशिशिवाहिकरत्रिमूल-
पूर्वासु पौष्णकरमैत्रमृगादितीज्ये ।
ध्रौवेषुचाश्विवसुपुष्यकरोत्तरेश-
कर्णे मृगांत्यलघुमैत्रधनादितौ सत ॥ ५७ ॥

[ अन्वयः ] शशिशिवाहिकरात्रिमूलपूर्वासु पौष्णकरमैत्रमृगादितीज्ये । ध्रौवेषु शाश्विवसुपुष्यकरोत्तरेशकर्णे मृगांत्यलघुमैत्रधनादितौ वेदक्रमात् सत् स्यात् इति ॥ ५७ ॥

अर्थः–मृगशिर आश्लेषा आर्द्रा हस्त चित्रा स्वाती मूल तीनों पूर्वा इन नक्षत्रोंमें ऋग्वेदवालोंका यज्ञोपवीत शुभ है । रेवती हस्त अनुराधा मृगशिर पुनर्वसु पुष्य रोहिणी तीनों उत्तरा इनमें यजुर्वेदवालोंका यज्ञोपवीत शुभ है । अश्विनी धनिष्ठा पुष्य अश्विनी हस्त अभिजित् अनुराधा धनिष्ठा पुनर्वसु इनमें अथर्ववेदियों का यज्ञोपवीत शुभ है ॥ ५७ ॥

नांदीश्राद्धके बाद माता रजस्वला हो उसका विचार–

नांदीश्राद्धोत्तरं मातुः पुष्पे लग्नांतरे न हि ।
शान्त्या चौलं व्रतं पाणिग्रहः कार्योऽन्यथा न सत् ॥५८॥

अर्थः—नांदीश्राद्ध के बाद यदि संस्कारवाले बालक की माता को पुष्पदर्शन

होवे और अन्य शुद्धलग्न न मिलता हो तो शांति करके यज्ञोपवीत विवाह ये श्रेष्ठ हैं अन्यथा नहीं ॥ ५८ ॥

अब छुरिकाबन्ध का मुहूर्त—

विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे ।
छुरिकाबन्धनं शस्तं नृपाणां प्राग्विवाहतः ॥ ५९ ॥

(अन्वयः) विचैत्रव्रतमासादौ विभौमास्ते विभूमजे नृपाणां क्षत्रियाणां विवाहतः प्राक्पूर्वं छूरिका बन्धनं शस्त स्यादिति ॥ ५९ ॥

अर्थः—चैत्र को छोड़ यज्ञोपवीत में कहे महीनों में अर्थात् माघ फाल्गुन वैशाख ज्येष्ठ इनमें और यज्ञोपवीत में कहे नक्षत्र जन्मलग्न आदिकों में और भौम गुरु शुक्र इनके अस्तरहित समयमें भौमरहित वारोंमें विवाहसे पहिले क्षत्रियों को छूरी कटिमें धारण करना शुभ है ॥ ५९ ॥

केशांत और समावर्तनका मुहूर्त-

केशांतं षोडशे वर्षे चौलोक्तदिवसे शुभम् ।
व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥ ६० ॥
इति मुहूर्तचिंतामणौ संस्कारप्रकरणम् ॥ ५ ॥

(अन्वयः) षोडशे वर्षे चौलोक्तदिवसे व्रतोक्तदिवसादौ हि निश्चयेन समावर्तनं इष्यते ॥ ६० ॥

अर्थः—चूडाकर्ममें कहे दिनमें सोलहवें वर्षमें केशान्तकर्म करना उत्तम है और यज्ञोपवीतमें कहे दिनमें समावर्तन कर्म कहा है ॥ ६० ॥

इति मुहूर्तचिन्तामणिभाषाटीकायां संस्कारप्रकरणं पंचमम् ॥ ५ ॥



# विवाहप्रकरणम् ६ ।

विवाहमें लग्नशुद्धिविचार–

भार्या त्रिवर्गकरणं शुभशीलयुक्ता
शीलं शुभं भवति लग्नवशेन तस्याः ।
तस्माद्विवाहसमयः परिचिंत्यते हि
तन्निघ्नतामुपगताः सुतशीलधर्माः ॥ १ ॥

(अन्वयः) शुभशीलयुक्ता या भार्या सा त्रिवर्गकरणं भवति तस्याः भार्यायाः लग्नवशेन शीलं शुभं भवति तस्मात्कारणात् हीति निश्चयेन विवाहसमयः परिचिन्त्यते विचार्यते, यतः तन्निघ्नतां किन्तु विवाहाधीनताम् सुतशील सुधर्मउपगताः प्राप्ता इति ॥ १ ॥

अर्थः–शुभशीलसे युक्त स्त्री धर्म अर्थ काम इनको देनेवाली होती है और सो शुभ शील, स्त्री को लग्नके वशसे होता है इसवास्ते विवाह समयके विषयमें विचार करना योग्य है, क्योंकि पुत्र शील धर्म विवाहके लग्नके आधीन है ॥१॥

प्रश्नलग्नसे विवाहका योगद्वय–

आदौ संपूज्य रत्नादिभिरथ गणकं वेदयेत्स्वस्थचित्तं
कन्योद्वाहं दिगीशानलहयविशिखे प्रश्नलग्नाद्यदींदुः ।
दृष्टो जीवेन सद्यः परिणयनकरो गोतुलाकर्कटाख्यं
वा स्यात्प्रश्नस्य लग्नं शुभखचरयुतालोकितं तद्विदध्यात् ॥२॥

(अन्वयः) अथाऽऽदौ स्वस्थचित्तं गणकं रत्नादिभिः सम्पूज्य कन्योद्वाहं वेदयेत् प्रश्नलग्नात् यदि इन्दुश्चन्द्रः दिगीशानलहयविशिखे जीवेन दृष्टः तदा सद्यः शीघ्रं परिणयनकरः स्यात् वा गोतुलाकर्कटाख्यं प्रश्नस्य लग्नं स्यात् शुभखचरयुतालोकितं तदा तद् परिणयनं विदध्यात् ॥ २ ॥

अर्थः–पहिले ज्योतिषीको रत्नादिकोंसे पूज उसको स्वस्थ चित्त देखकर कन्याके विवाहका प्रश्न करे। प्रश्नलग्नसे दशवें, ग्यारहवें, तीसरे, सातवें

पाचवें चन्द्रमा बृहस्पतिसे देखा जाता होवे तो शीघ्र विवाह कहना और वृष तुला कर्क इनमें से प्रश्नलग्न हो और उसको शुभ ग्रह देखते होवें तो भी विवाह शीघ्र कहना ॥ २ ॥

अन्य योगद्वय-

**विषमभांशगतौ शशिभार्गवौ तनुगृहं बलिनौ यदि पश्यतः ।**
**रचयतो वरलाभमिमौ यदा युगलभांशगतौ युवतिप्रदौ ॥ ३ ॥**

( अन्वयः ) बलिनौ शशिभार्गवौ विषमभांशगतौ तनुगृहं यदि पश्यतः स्तदा वरलाभं रचयतः- यदा इमौ शशिभार्गवौ युगलभांशगतौ तदा युवतिप्रदौ स्याताम् ॥ ३ ॥

अर्थः-विषम अर्थात् मेष मिथुन आदि राशिमें और विषम नवांशमें स्थित बली चन्द्रमा और शुक्र लग्न स्थानको देखें तो कन्याको वरलाभ कहना और यही ग्रह वृष कर्क आदि सम राशियोंपर होवें तो वरको कन्याका लाभ कहना ३

प्रश्नलग्नमें वैधव्यकारक योगत्रय-

**षष्ठाष्टस्थः प्रश्नलग्नाद्यदीन्दुर्लग्ने क्रूरः सप्तमे वा कुजः स्यात्।**
**मूर्ताविन्दुः सप्तमे तस्य भौमो रंडा सा स्यादष्टसंवत्सरेण ॥ ४ ॥**

( अन्वयः ) प्रश्नलग्नात् सकाशाद् यदि इन्दुश्चन्द्रः षष्ठाष्टस्थः क्रूरः लग्ने वा कुजः सप्तमे तदा अष्टसम्वत्सरेण रण्डा स्यात् वा इन्दुः मूर्तौ तस्य सप्तमे भौमः तदा सा अष्टसम्वत्सरेण रण्डा स्यादिति ॥ ४ ॥

अर्थः—जो प्रश्नलग्नसे छठवें आठवें चंद्रमा हो वा लग्नमें क्रूर ग्रह सातवें मंगल हो अथवा लग्नमें चन्द्रमा हो उसे सातवें मंगल हो तो विवाहवर्षसे आठ वर्षके भीतर कन्या विधवा होवे ॥ ४ ॥

प्रश्नलग्नसे कुलटामृतवत्सायोग-

**प्रश्नतनोर्यदि पापनभोगः पंचमगो रिपुदृष्टशरीरः ।**
**नीचगतश्च तदा खलु कन्या सा कुलटा त्वथवा मृतवत्सा ॥५॥**

( अन्वयः ) प्रश्नतनोः यदि पापग्रहः पञ्चमगः रिपुदृष्टशरीरः सन् नीचगतश्च स्यात्तदा खलु निश्चयेन सा कन्या कुलटा भवेत् अथवा मृतवत्सा भवेत् ॥५॥

अर्थः-जो प्रश्नलग्नसे पापग्रह पांचवें हो और शत्रुसे देखा जाता और नीच

राशिपर हो तो कन्या कुलटा अर्थात् व्यभिचारिणी होवे अथवा उसके बालक मर जावें ॥ ५ ॥

विवाहभंगका योग—

यदि भवति सितासिरिक्तपक्षे
तनुगृहतः समराशिगः शशांकः ।
अशुभखचरवीक्षितोऽरिरंध्रे
भवति विवाहविनाशकारकोऽयम् ॥ ६ ॥

( अन्वयः ) सितातिरिक्तपक्षे कृष्णपक्षे तनुगृहतः शशाङ्कश्चन्द्रः समराशिगः अशुभखचरवीक्षितः, अरिरन्ध्रे स्थितः तदायं योगो विवाहविनाशकारको भवति ॥ ६ ॥

अर्थः—जो कृष्णपक्ष में चन्द्रमा वृषकर्कादि समराशियों पर स्थित प्रश्न लग्नसे छठवे, आठवें स्थित हो और पापग्रहसे देखा जाता हो तो यह योग विवाहको भंग करता है ॥ ६ ॥

जन्म लग्नादिसे वैधव्य योग और उसका परिहार—

जन्मोत्थं च विलोक्य बालविधवायोगं विधाय व्रतं
सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः ।
सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा विवाहं स्फुटं
दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ॥ ७ ॥

( अन्वयः ) जन्मोत्थं जन्मकालीनं चकारात् प्रश्नलग्नोत्थं बालविधवा योगं विलोक्य सुतया कन्यया सावित्र्या व्रतं रह एकान्ते विधाय उत पैप्पलं व्रतं विधाय तदा इमां कन्यांशलग्ने चिरजीविने वराय दद्यात् अच्युतमूर्तिपिप्पल-घटैः स्फुटं विवाहं कृत्वा तां कन्यां चिरजीविने वराय दद्यात्–अत्र पुनर्भूभवो दोषो न भवेत् इति ॥ ७ ॥

अर्थः—कन्या के जन्म से बालविधवा का योग देखकर उससे सावित्री अथवा पीपल का व्रत कराके चिरजीवी वरको देवे अथवा अच्छे लग्न में नारायणकी मूर्ति, पीपल वा कुम्भ इनके साथ विवाह कराकर चिरजीवी वरको देवे । इसमें पुनर्भूभव दोष अर्थात् दूसरे विवाह का दोष नहीं होता ॥७॥

दूसरा योग—

प्रश्नलग्नक्षणे यादृशापत्ययुक् स्वेच्छया कामिनी तत्र चेदा व्रजेत् ॥ कन्यका वा सुतो वा तदा पंडितैस्तादृशापत्यमस्या विनिर्दिश्यते ॥ ८ ॥

( अन्वयः ) प्रश्नलग्नक्षणे स्वेच्छया यादृशापत्ययुक् कामिनी चेदाव्रजेत् कन्या वा सुतो वा तदा अस्याः तादृशापत्यं पण्डितैः विनिर्दिश्यते ॥ ८ ॥

अर्थः—प्रश्नलग्न के समय में जैसी सन्ततिवाली स्त्री अपनी इच्छा से आ जावे अथवा पुत्र या कन्या आजावे वैसीही सन्तान इस कन्या को पण्डित बतलावे ॥ ८ ॥

शंखभेरीविपंचीरवैर्मङ्गलं जायते वैपरीत्यं तदा लक्षयेत् । वायसो वा खरः श्वा शृगालोऽपि वा प्रश्नलग्नक्षणे रौति नादं यदि ॥ ९ ॥

( अन्वयः ) प्रश्नलग्नक्षणे शङ्खभेरीविपञ्चीरवैः मङ्गलं जायते, अपिवा वायसः, वा खरः श्वा शृगालः प्रश्नलग्नक्षणे यदि नादं शब्दं रौति तदा वैपरीत्यं लक्षयेत् ॥ ९ ॥

अर्थः—प्रश्नसमय में शंख भेरी वीणा का शब्द हो तो मंगल होवे । और कौआ, गर्दभ, कुत्ता, गीदड़ ये शब्द करें तो अमंगल होवे ॥ ९ ॥

विश्वस्वातीवैष्णवपूर्वात्रयमैत्रै-
र्वस्वाग्नेयैर्वा करपीडोचितऋक्षैः ।
वस्त्रालंकारादिसमेतैः फलपुष्पैः
संतोष्यादौ स्यादनु कन्यावरणं हि ॥ १० ॥

( अन्वयः ) विश्वस्वातीवैष्णवपूर्वात्रयमैत्रैर्वस्वाग्नेयैः वा करपीडोचितऋक्षैः वस्त्रालङ्कारादिसमेतैः फलपुष्पैः आदौ कन्यां सन्तोष्य अनुपश्चात्कन्यावरणं हि निश्चयेन स्यात् ॥ १० ॥

अर्थ—उत्तराषाढ़ स्वाती श्रवण तीनों पूर्वा अनुराधा धनिष्ठा कृत्तिका

अथवा विवाहमें कहे नक्षत्र इनमें वस्त्र आभूषण फल पुष्प आदि से कन्या को वरे ॥ १० ॥

वरके वरने का मुहूर्तः—

धरणिदेवोऽथवा कन्यकसोदरः
शुभदिने गीतवाद्यादिभिः संयुतः ॥
वरवृतिं वस्त्रयज्ञोपवीतादिना
ध्रुवयुतैर्वह्निपूर्वात्रयैः संचरेत् ॥ ११ ॥

( अन्वयः ) धरणिदेवः, अथवा कन्यकासोदरः शुभदिने गीतवाद्याभिः संयुतः, वस्त्रयज्ञोपवीतादिना ध्रुवयुतैर्वन्हिपूर्वात्रयैः नक्षत्रैः वरवृतिं आचरेत् ॥ ११ ॥

अर्थः—ब्राह्मण अथवा कन्या का भ्राता शुभ दिनमें गीत ( गाना ) और बाजेके साथ वस्त्र यज्ञोपवीत आदि लेकर तीनों उत्तरा रोहिणी कृत्तिका तीनों पूर्वा इन नक्षत्रों में वरको वरे ॥ ११ ॥

कन्या का विवाहकाल और विवाहमें ग्रहशुद्धि—

गुरुशुद्धिवशेन कन्यकानां समवर्षेषु षडब्दकोपरिष्टात् ।
रविशुद्धिवशाच्छुभो नराणामुभयोश्चंद्रविशुद्धितो विवाहः ११

( अन्वयः ) षडब्दकोपरिष्टात् गुरुशुद्धिवशेन समवर्षेषु कन्यकानां विवाहः शुभः स्यात् रविशुद्धिवशात् विषमवर्षेषु वराणां विवाहः शुभः स्यात् चन्द्र विशुद्धित उभयोः कन्यावरयो विवाहः शुभः स्यादिति ॥ १२ ॥

अर्थः—सम अर्थात् युग्म वर्षों में छः वर्षके उपरान्त गुरुके बलसे कन्याका विवाह करना और रविके बलसे वरका विवाह करना चन्द्रमाका बल दोनोंको देखना ॥ १२ ॥

विवाह में विहित महीने—

मिथुनकुम्भमृगालिवृषाजगे मिथुनगेऽपि रवौ त्रिलवे शुचेः ।
अलिमृगाऽजगते करपीडनं भवति कार्तिकपौषमधुष्वपि ॥१३॥

( अन्वयः ) रवौ मिथुनकुम्भमृगालिवृषाजगे मिथुनगेपि शुचेः त्रिलवे तदा करपीडनं भवति, अलिमृगाजगते कार्तिकपौषमधुषु अपि मासेषु करपीडनं भवतीति ॥ १३ ॥

अर्थः-मिथुन, कुम्भ, मकर, वृश्चिक, वृष, मेष, इन राशियोंपर सूर्य हो और मिथुन राशिपर सूर्य हो तो आषाढके शुक्ल प्रतिपदासे लेकर दशमीपर्यन्त विवाह हो सकता। उसी प्रकार से कार्त्तिकमें वृश्चिकका सूर्य, पौषमें मकरका सूर्य, चैत्रमें मेषका सूर्य होवे तो इन महीनों में विवाह हो सकता है ॥ १३ ॥

जन्ममासादिप्रयुक्त निषेध और विधान-

**आद्यगर्भसुतकन्ययोर्द्वयोर्जन्ममासभतिथौ करग्रहः।**
**नोचितोऽथ विबुधैः प्रशस्यते चेद्द्वितीयजनुषोःसुतप्रदः॥१४॥**

( अन्वयः ) आद्यगर्भसुतकन्ययोर्द्वयोः जन्ममासभतिथौकरग्रहो न उचितः, अथ चेद्यदि द्वितीयजनुषोः सुतप्रदस्तदा विबुधैः प्रशस्यते ॥ १४ ॥

अर्थः-पहले गर्भका पुत्र और पहले गर्भकी कन्या इनका विवाह जन्ममास जन्मनक्षत्र जन्मतिथिमें पण्डितोंने उत्तम नहीं कहा है, और दूसरे गर्भके वर और कन्याओंका विवाह पुत्रको देनेवाला होता है ॥ १४ ॥

**ज्येष्ठद्वंद्वं मध्यमं संप्रदिष्टं त्रिज्येष्ठं चेन्नैव युक्तं कदापि।**
**केचित्सूर्यं वन्हिगं प्रोज्झ्य चाहुर्नैवान्योन्यं ज्येष्ठयोःस्याद्विवाहः१५**

( अन्वयः ) ज्येष्ठद्वन्द्वं विवाहो मध्यमं सम्प्रदिष्टं त्रिज्येष्ठंचेत्कदापि नैव युक्तं ( च ) वन्हिगं सूर्यं प्रोह्य विवाहः स्यात् केचिदाहुः, अन्योन्यं ज्येष्ठयो र्विवाहो नैवस्यादिति ॥ १५ ॥

अर्थः-दो ज्येष्ठ अर्थात् मास वर तथा कन्या और मासहोवै तो विवाहमें मध्यम कहा है और तीन ज्येष्ठ कभी युक्त नहीं। कोई पण्डित कहते हैं, कि कृतिकापर सूर्य हो तो उसे त्याग ज्येष्ठ भी विवाह करना। आपसमें जेठे कन्या-वरोंका विवाह करना शुभ नहीं है ॥ १५ ॥

एक विवाहादि शुभकार्यसे दूसरे विवाह आदि शुभकार्यके लिये कालमर्यादाः-

**सुतपरिणयात्षण्मासांतः सुताकरपीडनं**
**न च निजकुले तद्वद्वा मंडनादपि मुण्डनम्॥**
**न च सहजयोर्देये भ्रात्रोः सहोदरकन्यके**
**न सहजसुतोद्वाहोऽब्दार्धे शुभे न पितृक्रिया॥ १६ ॥**

( अन्वय ) निजकुले सुतपरिणयात् सुताकरपीडनं न स्यात् वा तद्वद्

मण्डनादपि मुण्डनं न, चपुनः सहजयोः भ्रात्रोः सहजसुतोद्वाहो न स्यात् शुभे शुभकार्ये पितृ क्रिया न कार्या ॥ १६ ॥

अर्थः—एक कुलमें पुत्रके विवाहसे छः महीनेतक कन्याका विवाह न करे और विवाह करके मुण्डन अर्थात् चौल यज्ञोपवीत आदि कर्म छः महीने तक न करे, और एक माताके दो पुत्रोंका विवाह एकही माताकी दो कन्याओंके साथ नहीं करना और एक मातासे हुये दो भ्राताओंका छः महीनेके भीतर विवाह नहीं करना और छः महीनोंके भीतर पितरोंकी क्रिया श्राद्ध आदि भी नहीं करना ॥ १६ ॥

**वध्वा वरस्यापि कुले त्रिपूरुषे नाशं व्रजेत्कश्चन निश्चयोत्तरम् ।**
**मासोत्तरं तत्र विवाह इष्यते शांत्याथवा सूतकनिर्गमे परैः ॥१७॥**

( अन्वयः ) निश्चयोत्तरं त्रिपूरुषे कुले वध्वा वरस्यापि कश्चन नाशं व्रजेत् तत्र मासोत्तरं विवाह इष्यत अथवा सूतक निर्गमे शान्त्या विवाहः कार्यः, इति परैः इष्यते ॥ १७ ॥

अर्थः—वर अथवा वधूके कुलमें विवाहका निश्चय हो जानेके बाद तीन पीढ़ीके भीतर किसीकी मृत्यु हो जावे तो एक महीने पीछे शान्ति करके विवाह हो सकता है और कोई कहते हैं, कि सूतक निवृत्त हो जानेके बाद शांतिकरके विवाह करे ॥ १७ ॥

दूसरे चौल आदि कृत्यों में विचार—

**चूडाव्रतं चापि विवाहतो व्रताच्चूड़ा न चेष्टा पुरुषत्रयांतरे ।**
**वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतो वाब्दविभेदतः शुभः ॥१८**

( अन्वयः ) पुरुषत्रयान्तरे विवाहतश्चूड़ाव्रतमपि च नेष्टं व्रताच्चूड़ा नेष्टा वधूप्रवेशात् च पुनः सुताविनिर्गमः नेष्टः वा अब्दविभेदतः षण्मासतः शुभं स्यादिति ॥ १८ ॥

अर्थः—तीन पीढ़ीके भीतरके मनुष्यों का विवाह करनेके बाद ६ महीने तक चूड़ाकरण और व्रतबन्ध और व्रतबन्ध करनेके बाद छः महीने तक चूड़ाकरण शुभदायक नहीं होता और वधूप्रवेशके बाद ६ महीने तक पुत्रीका गवना न करे और वर्षके भेदसे छः महीना के भीतर भी शुभ है ॥ १८ ॥

वधूवरों के श्वशुर आदिकोंके बाधक अनिष्ट—

श्वश्रूविनाशमहिजौ सुतरां विधत्तः
कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ।
ज्येष्ठभजाततनया स्वधवाग्रजं च
शक्राग्निजा भवति देवरनाशकर्त्री ॥ १६ ॥

[ अन्वय, ] अहिजौ कन्यासुतौ सुतरां श्वश्रूविनाशं विधत्तः निर्ऋतिजौ च पुनः श्वशुरं हतः ज्येष्ठाभजाततनया च पुनः स्वधवाग्रजं हन्यात् शक्राग्निजा तदा देवरनाशकर्त्री भवति ॥ १६ ॥

अर्थः—आश्लेषा नक्षत्रमें उत्पन्न हुए कन्या पुत्रोंका विवाह हो तो सासका नाश हो । मूलमें उत्पन्न हुए अपने ससुरका नाश करते हैं । और ज्येष्ठा नक्षत्र में उत्पन्न हुई कन्या, अपने पतिके ज्येष्ठ भाईको नष्ट करती है । और विशाखामें जन्मी देवरका नाश करती है ॥ १६ ॥

इस दोष का अपवाद ।

द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा ।
मूलांत्यपादसार्पाद्यपादजाते तयोः शुभे ॥ २० ॥

[ अन्वयः ] द्वीशाजपादत्रयजा कन्या देवरसौख्यदा भवति मूलान्त्यपाद सार्पाद्यपाद जाते तयोः कन्यावरयोः शुभौ भवत इति ॥ २० ॥

अर्थः—विशाखाके आदिके तीन चरणोंमें उत्पन्न हुई कन्या देवरको सुखद होती है । और मूलके चौथे चरणोंमें उत्पन्न हुए कन्या पुत्र देते श्वशुरको सुख देते हैं । और आश्लेषाके पहले चरणमें उत्पन्न हुए कन्यापुत्र, सासको सुख देते हैं ॥ २० ॥

आठ वर्ण आदिके नाम—

वर्णो वश्यं तथा तारा योनिश्च ग्रहमैत्रकम् ।
गणमैत्रं भकूटं च नाडी चैते गुणाधिकाः ॥ २१ ॥

[ अन्वयः ] वर्णः वश्यं तथा तारा च पुनः योनिः ग्रहमैत्रकम् गणमैत्रं च भकूटं च पुनः, एते गुणाधिका भवन्तीति ॥ २१ ॥

अर्थः—वर्ण वश्य तारा योनि ग्रहमैत्री गणमैत्री भकूट नाडी इन वर्ण आदिकों

की परस्पर मैत्री हो तो एक अधिक गुण वाले हैं। जैसे वर्णमैत्री में एक गुण वश्यमें दो गुण इसी प्रकार और भी जानना ॥ २१ ॥

वर्णकूटका विचार-

द्विजा झषालिकर्कटास्ततो नृपा विशोऽङ्घ्रिजाः ।
वरस्य वर्णतोधिका वधूर्न शस्यते बुधैः ॥ २२ ॥

( अन्वयः ) झषालिकर्कटाः द्विजाः स्युः ततो नृपाः ततोऽङ्घ्रिजाः विशः वरस्य वर्णतः वधू वर्णोऽधिका बुधैर्न शस्यते ॥ २२ ॥

अर्थः—मीन, वृश्चिक, कर्क, ये राशि ब्राह्मण वर्ण हैं। और मेष, सिंह, धनु, क्षत्रिय हैं। और वृष, कन्या, मकर, यह वैश्य हैं। और मिथुन, तुला, कुम्भ, यह राशि शूद्र हैं। सो वरके वर्ण से श्रेष्ठ वर्णवाली कन्या पंडितोंने अच्छी नहीं कही है ॥ २२ ॥

वश्यकूटका विचार-

हित्वा मृगेंद्रं नरराशिवश्याः सर्वे तथैषां जलजास्तु भक्ष्याः ।
सर्वेऽपि सिंहस्य वशे विनालिं ज्ञेयं नराणां व्यवहारतोऽन्यत् २३

[ अन्वयः ] मृगेन्द्रं हित्वा सर्वे राशयो नरराशिवश्या भवन्ति तथा एषां जलजाश्च भक्ष्याः भवन्ति अलिं विना सिंहस्य वशे सर्वेऽपि राशयो वश्या भवन्ति नराणां व्यवहारतः अन्यद् ज्ञेयमिति ॥ २३ ॥

अर्थः-सिंहको छोड़के संपूर्ण राशि नर राशियों के वश्य हैं। और जलचर राशि नर राशियोंके भक्ष्य हैं। और वृश्चिक के विना सब राशि सिंहके वश्य हैं और चौपायोंका और जलचरोंका वश्यावश्य मनुष्योंके व्यवहारसे जानना २३

ताराकूटका विचार—

कन्यर्क्षाद्वरभं यावत् कन्याभं वरभादपि ।
गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम् ॥ २४ ॥

[ अन्वयः ] कन्यर्क्षात् वरभं यावत् गणयेत् वरभादपि कन्याभं यावद् गणयेत् नवहृत् त्रिष्वद्रिभं शेषे सति असत्स्मृतम् ॥ २४ ॥

अर्थः-कन्या नक्षत्र से वर नक्षत्र तक गिने। वैसेही वर नक्षत्रसे कन्या नक्षत्र

तक गिनै। और अलग अलग अंक में ९ नौ का भाग देने से तीन, पांच., सात बचे तो अशुभ समझना ॥ २४ ॥

योनिकूट का विचार-

अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासरः
सिंहो वस्वजपाद्भयोः समुदितो याम्यांत्ययोः कुञ्जरः
मेषो देवपुरोहितानलभयोः कर्णांबुनोर्वानरः
स्याद्वैश्वाभिजितोस्तथैव नकुलश्चांद्राब्जयोन्योरहिः ॥ २५ ॥
ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा
मार्जारोऽदितिसार्पयोरथ मघायोन्तोस्तथैवोंदुरुः ।
व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुध्न्यर्क्षयो-
र्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत् ॥ २६ ॥

( अन्वयः ) अश्विन्यम्बुपयोः हयः योनि र्निगदितः स्वात्यर्कयोः कासरः योनिः स्यात् वस्वजयाद्भयोः सिंहः योनिः समुदितः याम्यान्त्ययोः कुञ्जरःयोनि रुदितः देवपुरोहितानलभयोः मेषः योनिः स्यात् तथैव वैश्वाभिजितोः नकुलः योनिरुदितः चन्द्राब्जयोन्योः, अहिः योनिः स्यात् ॥ २५ ॥

ज्येष्ठामैत्रभयोः कुरंगयोनि रुदितः तथा मूलार्द्रयोः श्वा योनि रुदितः अथादितिसार्पयोः मार्जारः योनिः स्यात् द्वीशभचित्रयोरपि व्याघ्रः योनिः स्यात च पुनः अर्यम्णबुध्न्यर्क्षयोः गौःयोनिः पादगयोः भयोन्योः परस्परमहावैरं स्यात् तद्वैरं त्यजेदिति ॥ २६ ॥

अर्थः—अश्विनी शतभिषा नक्षत्रकी अश्वयोनि है। स्वाती हस्तकी भैंसा है। धनिष्ठा पूर्वाभाद्रपदाकी सिंह, भरणी रेवती हस्ती है, पुष्य कृत्तिका की मैंढा है; श्रवण पूर्वाषाढ़ की वानर है, उत्तराषाढ अभिजित्की नकुल है, मृगशिर रोहिणीकी सर्प है ॥ २५ ॥ ज्येष्ठा अनुराधाकी मृग है, मूल आर्द्राकी कुत्ता है, पुनर्वसु आश्लेषाकी विलाव है, मघा पूर्वाफाल्गुनीकी मूष है, विशाखा चित्रा की व्याघ्र है, उत्तराफाल्गुनी उत्तराभाद्रपदाकी गौ है श्लोकके चरणमें जो योनि हैं उनका महावैर जानना और सो वैर योनिमेलकमें त्याग देना ॥ २६ ॥

ग्रहकूट ग्रहोंकी परस्पर मैत्री—

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौ वैरिणौ
सौम्यश्चास्य समो विधोर्बुधरवी मित्रे न चास्य द्विषत्।
शेषाश्चास्य समाः कुजस्य सुहृदश्चंद्रेज्यसूर्या बुधः
शत्रुः शुक्रशनी समौ च शशभृत्सूनोः सिताहस्करौ ॥ २७ ॥
मित्रे चास्य रिपुः शशी गुरुशनिक्ष्माजाः समा गीष्पते-
र्मित्राण्यर्ककुजेंदवो बुधसितौ शत्रूसमः सूर्यजः।
मित्रे सौम्यशनी कवेः शशिरवी शत्रू कुजेज्यौ समौ
मित्रे शुक्रबुधौ शनेः शशिरविक्ष्माजा द्विषोऽन्यः समः ॥२८॥

(अन्वयः) द्युमणेः कुजेज्यशशिनो मित्राणि भवन्ति शुक्रार्कजौ वैरिणौ भवतः च पुनः, अस्य सौम्यः समः स्यात् विधोः बुधरवी मित्रे भवतः [च] अस्य द्विषश्च च पुनः शेषाः समाः भवन्ति कुजस्य चन्द्रेज्यसूर्याः सुहृदः स्युः बुधः शत्रुः स्यात् शुक्रशनी समौ च भवतः शशभृत्सूनोः सिताहस्करौ मित्रे भवतः च पुनः अस्य-शशी रिपुः स्यात् गुरुशनिक्ष्माजाः समाः स्युः गीष्पतेः अर्कजेन्दवः मित्राणि भवन्ति बुधसितौ शत्रू भवतः सूर्यजः समः शशिरवी शत्रू स्याताम् कुजेज्यौ समौ-स्तः शनेः शुक्रबुधौ मित्रे भवतः शशिरविक्ष्माजाः द्विषः शत्रवा भवन्ति अन्यः समः स्यात् ॥ २७-२८ ॥

अर्थः—सूर्यके मंगल बृहस्पति और चन्द्रमा मित्र हैं और शुक्र शनि शत्रु है और बुध इसका सम है। चन्द्रमाके बुध सूर्य मित्र हैं। इसके शत्रु नहीं, बाकी ग्रह चन्द्रमाके सम हैं। चन्द्रमा बृहस्पति सूर्य मित्र हैं, बुध शत्रु है और शुक्र शनि सम है। बुधके शुक्र रविमित्र है ॥ २७ ॥ चंद्रमा शत्रु है, और गुरु, शनि, मङ्गल सम हैं। गुरुके सूर्य मङ्गल चन्द्रमा मित्र है, बुध शुक्र, है, और शनिश्चर सम है। शुक्रके बुध शनि मित्र हैं, चन्द्र, सूर्य शत्रु, और मंगल, गुरु सम हैं। शनिके शुक्र, बुध मित्र हैं, चन्द्र, मङ्गल शत्रु हैं और गुरु सम है ॥ २७-२८ ॥

गणकूट का विचार और फल—

रक्षोनरामरगणाः क्रमतो मघाहि-
वस्विंद्रमूलवरुणानलतक्षराधाः।

पूर्वोत्तरात्रयविधातृयमेशभानि
मैत्रादितींदुहरिपौष्णमरुल्लघूनि ॥२६॥
निजनिजगणमध्ये प्रीतिरत्युत्तमा स्या-
दमरमनुजयोः सा मध्यमा संप्रदिष्टा ।
असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो
दनुजविबुधयोः स्याद्वैरमेकांततोऽत्र ॥ ३०॥ ॥

( अन्वयः ) मघाहिवस्विन्द्रमूलवरुणानलतक्षराधाः, पूर्वोत्तरात्रयविधातृय-मेशभानि, मैत्रादितीन्दुहरिपौष्णमरुल्लघूनि नक्षत्राणि क्रमतः रक्षोनरामरगणाः स्युरिति ॥ २६ ॥

( अन्वयः ) निजनिजगणमध्ये अत्युत्तमा प्रीतिः स्यात् सा प्रीतिः, अमर-मनुजयोः मध्यमा सम्प्रदिष्टा असुरमनुजयोश्चेत् मृत्युरेव प्रदिष्टः दनुजविबुधयोः अत्र एकान्ततो वैरं स्यात् ॥ ३० ॥

अर्थः—मघा, आश्लेषा, धनिष्ठा, ज्येष्ठा, मूल, शतभिषा, कृत्तिका, चित्रा, विशाखा, इनका राक्षसगण है। तीनों पूर्वा, तीनों उत्तरा, रोहिणी, भरणी, आर्द्रा, इनका मनुष्य हस्त, अभिजित् इनका देवतागण है । एक गण के स्त्री पुरुष होवें तो अति उत्तम प्रीति हो । स्त्री, पुरुष, देव, मनुष्य गण के होवें तो मध्य प्रीति हो । असुर मनुष्य गण के हों तो मृत्यु कहनी । देव राक्षस हों तो महा वैर हो । देव मनुष्य में चार गुण हैं । एक गण में छ गुण ऐसा जानना ॥ २६ ॥ ३० ॥

राशिकूट का विचार—

मृत्युः षट्काष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे ।
द्विर्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ॥ ३१ ॥

( अन्वयः ) षष्ठाष्टके सति मृत्युर्ज्ञेयः नवात्मजे अपत्यहानिः स्यात् द्विर्द्वादशे निर्धनत्वं अन्यत्र द्वयोः सौख्यकृत् स्यादिति ॥ ३१ ॥

अर्थः—स्त्री पुरुष की परस्पर छठीं आठवीं राशि होवे तो मृत्यु जानना और नवीं पांचवीं राशि हो तो संतान नष्ट हों । दूसरी, बारहवीं, हो तो दरिद्रता हो ।

तीसरी, ग्यारहवीं, चौथी, दसवीं, सातवीं ये राशि होवें तो विवाह सुख देने वाला होता है ॥ ३१ ॥

दुष्ट भकूट का परिहार—

प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभो-
ऽथो राशीश्वरसौहृदेऽपि गदितो नाड्यृक्षशुद्धिर्यदि।
अन्यर्क्षांशपयोर्बलित्वसखिते नाड्यर्क्षशुद्धौ तथा
ताराशुद्धिवशेन राशिवशताभावे निरुक्तो बुधैः ॥३२॥

( अन्वयः ) दुष्टभकूटके प्रोक्ते सति एकाधिपत्ये तु परिणयः शुभो गदितः, अथो राशीश्वरसौहृदेऽपि यदि नाड्यर्क्षशुद्धिः तदा परिणयः शुभो गदितः अन्यर्क्षांशपयोः बलित्वसखिते तथा नाड्य र्क्षशुद्धौ सत्यां परिणयःशुभःस्यात् ताराशुद्धिवशेन राशिवशताभावे बुधैः परिणयो निरुक्तः इति ॥ ३२ ॥

अर्थः—स्त्री व पुरुष की राशि का एक स्वामी होवे तो दुष्ट भकूट अर्थात् छठे, आठवीं, राशि में भी विवाह शुभ है। अथवा राशि स्वामियों की मैत्री होवे और नाडी नक्षत्रों की शुद्धि होवे तब भी दुष्ट कूट में विवाह शुभ है। परस्पर राशियों में षडष्टक हो और राशियों के स्वामियों में मित्रता न हो, नवांश के स्वामियों में बलवान् मित्रता हो और नाडीनक्षत्रों की शुद्धि हो, तारा शुद्ध हो, राशिवश्य का भाव हो अर्थात् वश्यावश्य बनता हो तब भी पण्डितों ने विवाह करना शुभ कहा है ॥ ३२ ॥

दुष्ट गणकूट भकूट ग्रहकूट इनका परिहार—

मैत्र्यां राशिस्वामिनोरंशनाथद्वंद्वस्यापि स्याद्गणानां न दोषः।
खेटारित्वं नाशयेत्सद्भकूटं खेटप्रीतिश्चापि दुष्टं भकूटम् ॥३३॥

( अन्वयः ) राशिस्वामिनोः अंशनाथद्वन्द्वस्यापि मैत्र्यां सत्यां गणानां दोषो न भवति, सद्भकूटं खेटारित्वं नाशयेत् खेटप्रीतिश्चापि दुष्टं भकूटं नाशयेदिति ॥ ३३ ॥

अर्थः—स्त्री पुरुष की राशियों के स्वामियों में मित्रता हो तथा नवांश के स्वामियों में मित्रता होवे तो गण का दोष नहीं लिया जाता और सद्भकूट तीसरे

ग्यारहवें इत्यादि ग्रह वैरकृत दोष को नष्ट करता है। इसीप्रकार ग्रहों की प्रीति दुष्ट भकूट को नाश करती है ॥ ३३ ॥

नाडीकूट का विचार—

ज्येष्ठारौद्रार्यमांभः पतिभयुगयुगं दास्रभं चैकनाडी
पुष्येंदुत्वाष्ट्रमित्रांतकवसुजलभं योनिबुध्न्ये च मध्या।
वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं च परा स्या-
द्दम्पत्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः३४

(अन्वयः) ज्येष्ठारौद्रार्यमाम्भः पतिभयुगयुगं दास्रभं च एकनाडी स्यात् पुष्येन्दुत्वाष्ट्रमित्रान्तकवसुजलभं योनि बुध्न्ये च मध्या नाडी स्यात्, वाय्वग्नि-व्यालविश्वोडुयुगयुगं अथो पौष्णभं च अपरा नाडी, स्यात् दम्पत्योः कन्यावरयो रेकनाड्यां परिणयनं असत स्यात् मध्यनाड्यां हि निश्चयेन मृत्युः स्यात् ॥ ३४ ॥

अर्थः-ज्येष्ठा आर्द्रा उत्तराफाल्गुनी शतभिषा इन नक्षत्रों से दो दो जैसे ज्येष्ठा मूल आदि और अश्विनी यह एक नाडी के हैं और पुष्य मृगशिर, चित्रा, अनुराधा· भरणी, धनिष्ठा, पूर्वाषाढा, पूर्वाफाल्गुनी; उत्तराभाद्रपदा ये नक्षत्र मध्यनाडी के हैं। स्वाती, विशाखा, कृत्तिका, रोहिणी, आश्लेषा, मघा, उत्तरा-षाढ़ा, श्रवण रेवती ये नक्षत्र तृतीय नाडी के हैं। स्त्री पुरुष का एक नाडी में विवाह होवे तो दुष्ट फल कहना मध्य नाडी में हो तो मृत्यु कहना ॥ ३४ ॥

पूर्व मध्य अपरभाग योगी नक्षत्र—

पौष्णेशशाक्राद्रसमूर्यनंदा-
पूर्वार्धमध्यापरभागयुग्मम्।
भर्ता प्रियः प्राग्युजि भे स्त्रियाः स्या-
न्मध्ये द्वयोः प्रेम परे प्रिया स्त्री ॥ ३५ ॥

[अन्वयः] पौष्णेशशाक्राद्रसमूर्यनन्दा, पूर्वार्द्धमध्यापरभागयुग्मम् स्यात् प्राग्युजि भे स्त्रियाः भर्ता प्रियः स्यात् मध्ये युजि भे द्वयोः प्रेम भवति परे युजि भे स्त्री नृणां प्रिया भवेदिति ॥ ३५ ॥

अर्थः-रेवती, आर्द्रा, ज्येष्ठा, इनसे लेकर छः बारह नव पूर्वभाग मध्यभाग पर भाग क्रम से जानना। जैसे रेवती से छः पूर्वभाग आर्द्रा से बारह मध्यभाग और ज्येष्ठा से नव पर भाग। पूर्व भाग में दोनों के नक्षत्र हों भर्ता प्रिय होवे। मध्यभाग में परस्पर प्रीति हो। पर भाग में स्त्री प्रिय हो ॥ ३५ ॥

प्राचीन विद्वानों के मत से वर्गकूट—

अकचटतपयशवर्गाः खगेशमार्जारसिंहशुनाम् ।
सर्पाखुमृगावीनां निजपञ्चमवैरिणामष्टौ ॥३६॥

[ अन्वयः ] खगेशमार्जारसिंहशुनां सर्पाखुमृगावीनां निजपञ्चमवैरिणां अष्टौ अकचटतपयशवर्गाः भवन्तीति ॥ ३६ ॥

अर्थः—अवर्ग, कवर्ग, चवर्ग, टवर्ग, तवर्ग, पवर्ग, लवर्ग, शवर्ग ये आठ वर्ग क्रम से गरुड़, बिलाड, सिंह, कुत्ता, सर्प, मूसा, मेंढा, इनके जानना और अपने से पांचवां शत्रु जानना ३६

नक्षत्रैक्य और राश्यैक्यमें विचार—

राश्यैक्ये चेद्भिन्नमृक्षं द्वयोः स्यान्नक्षत्रैक्ये राशियुग्मं तथैव।
नाडीदोषो नो गणानां च दोषो नक्षत्रैक्ये पादभेदे शुभं स्यात् ३७

[ अन्वयः] द्वयोः कन्यावरयोः राश्यैके चेद्यदि ऋक्षभिन्नं तथा एव नक्षत्रैक्ये राशियुग्मम् तदा नाडीदोषः गणानाञ्च दोषः नो, नक्षत्रैक्ये तदा पादभेदे शुभं स्यादिति ॥ ३७ ॥

अर्थः-वरवधुओं की राशि एक हो और नक्षत्र भिन्न हो तथा नक्षत्र एक हो और चरण का भेद होवे तो भी शुभ है ॥ ३७ ॥

नौकर आदिकों का नक्षत्र स्वामि नक्षत्र से पूर्व होने से फल-

सेव्याधमर्णयुवतीनगरादिभं चे-
त्पूर्वं हि भृत्यधनिभर्तृपुरादिसद्भात् ।
सेवाविनाशधननाशनभर्तृनाश-
ग्रामादिसौख्यहृदिदं क्रमशः प्रदिष्टम् ॥ ३८ ॥

[ अन्वयः ] भृत्यधनिभर्तृपुरादिसद्भात् सेव्या धमर्णनगरादिभं चेद्यदि

पूष हि निश्चयेन, सेवाविनाशधननाशनभर्तृनाशग्रामादिसौख्यहृत् इदं क्रमशः प्रदिष्टमिति ३८ ॥

अर्थः—स्वामी, ऋण लेनेवाला, युवती, नगर आदिकों का नक्षत्र नौकर, धनी, भर्ता पुरवासी इन्हीं के नक्षत्र से पूर्व होवे तो क्रम से सेवानाश धननाश भर्तृनाश ग्रामादि सुतनाश फल कहने । जैसे प्रथम जन्मनक्षत्र सेव्य का है दूसरा सेवक का होवे तो सेवा का नाश होवे ऐसे ही आगे भी जानना ॥ ३८ ॥

राशिस्वामियों का और नवांशविधि-

कुजशुक्रसौम्यशशिसूर्यचंद्रमाः
कविभौमजीवशनिसौरयो गुरुः ।
इह राशिपाः क्रियमृगास्यतौलिकें
दुभतो नवांशविधिरुच्यते बुधैः ॥ ३९ ॥

[ अन्वयः ] कुजशुक्रसौम्यशशिसूर्यचन्द्रमाः कविभौमजीवशनिसौरयः गुरुश्च क्रमेणेह राशिपा भवन्ति क्रियमृगास्यतौलिकेन्दुभतः नवांशविधिः बुधैरुच्यते ३९

अर्थः-मंगल, शुक्र, बुध, चन्द्रमा, सूर्य बुध शुक्र, मंगल, गुरु, शनि, और गुरु ये ग्रह क्रम से मेषादि राशियों के स्वामी कहे हैं, मेष मकर तुला कर्क इन राशियों से नवांशविधि कही है, जैसे मेष का नवांश मेष से वृष का मकर से मिथुन का तुला से कर्क का कर्क से सिंह का मेष से कन्या आदिका मकरादिकों से इस क्रम से धनु आदिकों का मेषादिकों से ऐसे जानना ॥ ३९ ॥

होरा का विचार-

समगृहमध्ये शशिरविहोरा ।
विषमभयमध्ये रविशशिनोः सा ॥ ४० ॥

[ अन्वयः ] समगृहमध्ये शशिरविहोरा स्यात् विषमभयमध्ये रविशशिनोः सा होरा भवतीति ४० ॥

अर्थः-समराशियों में तो प्रथम चन्द्रमा की होरा अर्थात् पन्द्रह भाग है और दूसरी पन्द्रह भाग सूर्य की है विषमराशियों में पहिली सूर्य की होरा व दूसरी चन्द्रमा की ॥ ४० ॥

त्रिशांश और द्रेष्काण—

शुक्रज्ञजीवशनिभूतनयस्य बाण-
शैलाष्टपञ्चविशिखाः समराशिमध्ये ।
त्रिंशांशको विषमभे विपरीतमस्मा-
द्द्रेष्काणकाः प्रथमपंचनवाधिपानाम् ॥४१॥

[ अन्वयः ] समराशिमध्ये शुक्रज्ञजीवशनिभूतनयस्य बाणशैलाष्टपञ्चविशिखाः, त्रिंशांशकः विषमभे अस्मात् विपरीतं ज्ञेयं प्रथमपञ्चनवाधिपानां द्रेष्काणकाः स्युरिति ॥ ४१ ॥

अर्थः—शुक्र बुध गुरु शनि मंगल इन ग्रहों का पांच सात आठ पांच पांच इस क्रम से समराशियों में त्रिंशांश में जानना । जैसे शुक्र पांच अंशों का स्वामी बुध सात अंशों का स्वामी और विषम राशियों में उलटा जानना । जैसे प्रथम पांच अंश का स्वामी, भौम फिर पांच का शनि स्वामी इसी प्रकार और भी जानना । दश अंश का द्रेष्काण होता है । सो प्रथम द्रेष्काण नवम राशिके स्वामी का इस प्रकार होता है ॥ ४१ ॥

द्वादशांश और षड्वर्गों का उपसंहार—

स्याद्द्वादशांश इह राशित एव गेहं
होराथ दृक्कनवमांशकसूर्यभागाः ।
त्रिंशांशकश्च षडिमे कथितास्तु वर्गाः
सौम्यैः शुभं भवति चाशुभमेव पापैः ॥ ४२ ॥

( अन्वयः ) द्वादशांश इह राशित एव गेहं अथ होरा स्यात् दृक्कनवमांशकसूर्यभाः । त्रिंशांशकश्च इमे षड्वर्गाः कथिताः तु पुनस्ते सौम्यैः शुभं भवति पापैश्चा शुभमेव भवतीति ॥ ४२ ॥

अर्थः—यह षड्वर्ग में अपनी राशि से ढाई भाग का द्वादशांश जानना । जैसे मेष का द्वादशांश मेष आदि, वृष का वृष आदि । और राशि होरा द्रेष्काण नवमांश द्वादशांश त्रिंशांश ये षड्वर्ग कहे हैं । यह सौम्यग्रहों के शुभ हैं पापग्रहों के अशुभ हैं जो मिले होवें तो अधिक वर्ग की तरह फल कहना ॥ ४२ ॥

गण्डान्तदोष का विचार-

ज्येष्ठापौष्णभसार्पभांत्यघटिकायुग्मं च मूलाश्विनी
पित्र्यादौ घटिकाद्वयं निगदितं तद्भस्य गंडांतकम् ।
कर्काल्यंडजभांततोऽर्धघटिका सिंहाश्वमेषादिगा
पूर्णान्तादृघटिकात्मकं त्वशुभदं नंदातिथेश्चादिमम् ॥४३

( अन्वयः ) ज्येष्ठा.पौष्णभसार्पभान्त्यघटिका युग्मं च पुनः मूलाश्विनी, पित्र्यादौ घटिकाद्वयं तद्भस्य गण्डान्तकं निगदितं ततः कर्काल्यंडजभान् अर्ध-घटिका सिंहाश्वमेषादिगा पूर्णान्ते घटिकात्मकं तु पुनः नन्दातिथेश्च आदिमम् गंडान्तं अशुभं स्यादिति ॥ ४३ ॥

अर्थः-ज्येष्ठा रेवती आश्लेषा इनकी अन्त की दो घड़ी गंडांत है और मूल अश्विनी मघा इनकी आदि की दो घड़ी गंडांत हैं यह नक्षत्रगंडांत है और कर्क वृश्चिक मीन इनके अन्त की आधी घड़ी गंडांत है और सिंह धनु मेष इनकी आदि की आधी घडी गंडान्त है। यह लग्न गण्डान्त है और ५ । १० १५ इन तिथियों की अन्त की एक घड़ी गण्डान्त है और १ । ६ । ११ इन तिथियों की आदि की एक घड़ी गण्डान्त है यह तिथि गण्डान्त है यह अशुभ फल देनेवाली है ॥ ४३ ॥

कर्तरीदोष का विचार-

लग्नात्पापावृज्वनृजू व्ययार्थस्थौ यदा तथा ।
कर्तरी नाम सा ज्ञेया मृत्युदारिद्र्यशोकदा ॥४४॥

( अन्वयः ) यदा लग्नाद् सकाशाद् पापौ पापग्रहौ ऋज्वनृजू व्ययार्थस्थौ तदा कर्तरी ज्ञेया सा कर्तरी मृत्युदारिद्र्यशोकदा भवेत् इति ॥ ४४ ॥

अर्थः-जो लग्न से सीधा चलनेवाला पापग्रह बारहवें स्थान में होवे और पापग्रह वक्री दूसरे स्थान में होवे तो कर्तरीनाम दोष कहना। सो मृत्यु दारिद्र व शोक देनेवाला होता है ॥ ४४ ॥

ग्रहयोग विचार-

चंद्रे सूर्यादिसंयुक्ते दारिद्र्यं मरणं शुभम् ।

सौख्यं सापत्न्यवैराग्ये पापद्वययुते मृतिः ॥४५॥

( अन्वयः ) सूर्यादियुक्ते चन्द्रे दारिद्र्यं मरणं शुभम् सौख्यं सापत्न्यवैराग्यं स्यात् पापद्वययुते चन्द्रे मृत्युरेव स्यादिति ॥ ४५ ॥

अर्थः-सूर्ययुक्त चन्द्रमा होवे तो दरिद्रता हो मंगलयुक्त चन्द्रमा हो तो मरण हो बुधयुक्त चन्द्रमा हो तो शुभ हो गुरुयुक्त चन्द्रमा हो तो सौख्य हो शुक्रयुक्त चन्द्रमा हो तो शत्रुता हो शनियुक्त चन्द्रमा हो तो वैराग्य हो और दो पापग्रहों से युक्त चन्द्रमा हो तो मृत्यु हो इस प्रकार ग्रहयोग फल जानना ॥ ४५ ॥

अष्टम लग्नदोष अपवादसहित-

जन्मलग्नभयोर्मृत्युराशौ नेष्टः करग्रहः ।
एकाधिपत्ये राशीशमैत्रे वा नैव दोषकृत ॥४६॥

( अन्वयः ) जन्मलग्नभयोः मृत्युराशौ करग्रहः नेष्टः स्यात् राशीशे एकाधिपत्ये वा मैत्रे तदा दोषकृत् नैव स्यादिति ॥ ४६ ॥

अर्थः-जन्मलग्न व जन्मराशि से अष्टमराशि में विवाह होना श्रेष्ठ नहीं परंतु जन्मराशि व जन्मलग्न में से किसीका और विवाह लग्न का स्वामी एक ही हो वा राशीश्वरों में मित्रता होवे तो दोष नहीं ॥ ४६ ॥

पहिले श्लोक के उत्तरार्ध का विवरण-

मीनोक्षकर्कालिमृगस्त्रियोष्टमं लग्नं यदा नाष्टमगेहदोषकृत् ।
अन्योन्यमित्रत्ववशेन सा वधूर्भवेत्सुतायुर्गृहसौख्यभागिनी ४७

( अन्वयः ) मीनोऽक्षकर्कालिमृगस्त्रियः यदाऽष्टमं लग्नं तदा अष्टमं दोषकृत् न, अन्योन्यमित्रत्ववशेन सा वधूः सुतायुः गृहसौख्यभागिनी च भवेदिति ॥४७॥

अर्थः-मीन वृष कर्क वृश्चिक मकर कन्या ये राशि जो अष्टमलग्न में हों तो अष्टम लग्न दोष करनेवाला न हो और आपस में ग्रहों की मैत्री हो तो वह वधू पुत्र आयु और गृहसौख्य से संयुक्त होती है ॥ ४७ ॥

मृतिभवनांशो यदि च विलग्ने तदधिपतिर्वा न शुभकरः स्यात्
व्ययभवनं वा भवति तदंशस्तदधिपतिर्वा कलहकरः स्यात् ४८

( अन्वयः ) मृतिभवनांशः यदि विलग्ने स्यात् अथवा तदधिपतिः विलग्ने

तदा न शुभकरः स्यात् वा तदंशः व्ययभवनं वा तदधिपति र्व्ययभवनं तदा कलहकरः स्यादिति ॥ ४८ ॥

अर्थः-अष्टमलग्न वा अष्टमभवनका नवांशक लग्न में हो अथवा अष्टमलग्न का स्वामी हो तो शुभप्रद नहीं होता और जन्मलग्न व जन्मराशि से द्वादशभवन विवाहलग्न में हो अथवा व्ययभवन का अंश होवे अथवा उसका स्वामी होवे तो कलह का करनेवाला होता है ॥ ४८ ॥

विषघटीका दोषविचार—

खरामतो ३० ऽन्त्यादितिवह्निपित्र्यभे
खवेदतः ४० के रदत ३२ श्च सार्पभे ।
खबाणतो ५० श्वे धृतितो १८ ऽर्यमांबुपे
कृते २० ऽङ्गतत्वाष्ट्रभविश्वजीवभे ॥ ४९ ॥
मनो १४ र्द्विदैवानिलसाम्यशाक्रभे
कुपक्षतः २१ शैवकरेष्टि १६ तोऽजभे
युगाश्वितो २४ बुध्न्यभतोययाम्यधे
खचंद्रतो १० मित्रभवासवश्रुतौ ॥ ५० ॥
मूलेऽङ्गबाणा ५६ द्विषनाडिकाः कृताः
वर्ज्याः शुभेऽथो विषनाडिका ध्रुवाः ।
विघ्ना भभोगेन खतर्क ६० भाजिताः
स्फुटा भवेयुर्विषनाडिकास्तथा ॥ ५१ ॥

( अन्वयः ) अन्त्यादितिवह्निपित्र्यभे खरामतः के खवेदतः सार्पभे च पुनः रदतः, अश्वे खबाणत , अर्यमाम्बुपे धृतित. भगत्वाष्ट्रभविश्वजीवभे कृते रिति । द्विदैवानलसौम्यशाक्रभे मनोः शैवकरे कुपक्षतः, अजभे, अष्टितः बुध्न्यभतोययाम्यभे युगाश्विनः मित्रभवासवश्रुती खचन्द्रतः । मूले अङ्गबाणात् एते विषनाडिकाः कृता , अथो शुभे विषनाडिका ध्रुवा वर्ज्याः, तथा विषनाडिकाश्च याः

भभोगेन निघ्नाः खतर्कभाजितास्तदा स्फुटा विषनाड़िका ध्रुवा भवेयुरिति ॥ ४६—५०-५१ ॥

अर्थः-रेवती पुनर्वसु कृत्तिका मघा इन नक्षत्रोंमें ३० तीस घड़ीके बादकी चार घड़ी विषघड़ी हैं। रोहिणीमें ४० चालीस घड़ी पीछे चार घड़ी, अश्लेषा में ३२ घड़ी पीछे चार घड़ी, अश्विनीमें ५० घड़ी, पीछे भरणी शतभिषामें १८ अठ्ठारह घड़ी पीछे वि घड़ी, पूर्वाफाल्गुनी चित्रा उत्तराषाढ़ा पुष्य इन नक्षत्रोंमें २० घड़ी पीछे चार घड़ी विषसंज्ञक है ॥ ४६ ॥ विशाखा, स्वाती, मृगशिर, ज्येष्ठा, इनमें १४ घड़ी उपरान्त चार घड़ी विषसंज्ञक है, आर्द्रा हस्तमें २१ घड़ी पीछे चार घड़ी विषसंज्ञक है और श्रवणमें १६ सोलहघड़ीके उपरान्त चार घड़ी विषकी हैं। उत्तराभाद्रपदा, पूर्वाषाढा, भरणी इन नक्षत्रोंमें २४घड़ीके उपरान्त चार घड़ी विषकी हैं। अनुराधा धनिष्ठा श्रवण इन नक्षत्रोंमें १० दश घड़ीके उपरान्त चार घड़ी विष की है ॥ ५० ॥ मूल नक्षत्रमें ५६ छप्पन घड़ीसे आगे जो विषनाड़ी हैं सो शुभ काममें वर्जित हैं। विषनाडीके ध्रुवाको इष्ट नक्षत्र के भोगसे गुणा कर पीछे साठका भाग देवे तो ध्रुवा स्पष्ट हो जाता है। उसी प्रकार विषनाड़ीको भी नक्षत्रभोगसे गुणा कर फिर साठका भाग देने से जो लब्धि हो उसे विषनाड़ी स्पष्ट जानना ॥ ५१ ॥

दुर्मुहूर्त दोष और विवामुहूर्त-

गिरिशभुजगमित्राः पित्र्यवस्वंबुविश्वे-
ऽभिजिदथ च विधातापींद्र इंद्रानलौ च ।
निर्ऋतिरुदकनोथोऽप्यर्यमाथो भगः स्युः
क्रमश इह मुहूर्ता वासरे बाणचंद्राः ॥ ५२ ॥

(अन्वयः) गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वेभिजित् अथ च विधातापीन्द्रः च पुनः इन्द्रानलौ निर्ऋतिः उदकनाथः अपि अर्यमं अथो भगः क्रमश इह वासरेर्वाणचन्द्राः मुहूर्ताः स्युः ॥ ५२ ॥

अर्थः-शिव भुजग मित्र पितृ वसु जल विश्वेदेव अभिजित विधाता इंद्र इन्द्राग्नी निर्ऋति उदकनाथ अर्यमा भग इनके दिनमें पंद्रह मुहूर्त कहे हैं ॥५२॥

अथ रात्रिमुहूर्तके विषय विचार-

शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ ।

विष्णवर्कत्वाष्ट्रमरुतो मुहूर्ता निशि कीर्तिताः ॥ ५३ ॥

( अन्वयः ) शिवः अजपादात् अष्टौ भेशाः स्युः अदितिजीवकौ विष्णवर्कत्वा-ष्ट्रमरुतो निशि मुहूर्ताः कीर्तिताः ॥ ५३ ॥

अर्थः-शिव अजपात् आदि आठ नक्षत्रोंके स्वामी अदिति, गुरु, विष्णु, अर्क, त्वष्टा मरुत् आदि ये १५ मुहूर्त रातमें होते है ॥ ५३ ॥

रवि आदि वारोंमें दुर्मुहूर्त-

रवावर्यमा ब्रह्मरक्षश्च सोमे
कुजे वह्निपित्र्ये बुधे चाभिजित्स्यात् ।
गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये
शनावीशसार्पौ मुहूर्ता निषिद्धाः ॥ ५४ ॥

( अन्वयः ) रवौ अर्यमा सोमे च पुनः ब्रह्मा रक्षः कुजे वन्हिपित्र्ये, बुधे च अभिजित् स्यात् गुरौ तोयरक्षौ भृगौ ब्राह्मपित्र्ये शनौ ईशसार्पौ एते मुहूर्ता निषिद्धाः स्युरिति ॥ ५४ ॥

अर्थः-रविवारमें अर्यमा, सोमवारमें ब्राह्म व राक्षस, मंगलवारमें अग्नि पित्र्य, बुधवारमें अभिजित् गुरुवारमें जल राक्षस, भृगुवारमें ब्राह्म पितृ, शनिवा रमें ईश सार्प ये मुहूर्त निषिद्ध है ॥ ५४ ॥

विवाहमें विहित नक्षत्र आदि और अभिजितका मान-

निर्वेधैः शशिकरमूलमैत्रपित्र्य-
ब्राह्मान्त्योत्तरपवनैः शुभो विवाहः ।
रिक्तामारहिततिथौ शुभेऽह्नि वैश्व-
भांत्यांघ्रिः श्रुतितिथिभागतोऽभिजित्स्यात् ॥ ५५ ॥

( अन्वयः ) शशिकरमूलमैत्रपित्र्यब्राह्मान्त्योत्तरपवनैः निर्वेधैः विवाहः शुभः स्यात् , रिक्तामारहिततिथौ, शुभेऽह्नि वैश्वभान्त्यांघ्रिश्रुतितिथि भागतो-ऽभिजित् एतेषु नक्षत्रेषु विवाहः शुभो भवतीति ॥ ५५ ॥

अर्थ-मृगशिर हस्त मूल अनुराधा मघा रोहिणी रेवती तीनों उत्तरा स्वाती

वेधसे रहित इन नक्षत्रोंमें और रिक्ता अर्थात् ४।९।१४। और अमावास्या इनसे रहित तिथियोंमें और शुभवारोंमें विवाह करना शुभ है । उत्तराषाढ़का चौथा चरण और श्रवणका पन्द्रहवां भाग अभिजित् होता है ॥ ५५ ॥

पंचशलाका चक्र–

बेधोऽन्योन्यमसौ विरिंच्यभिजितोर्याम्यानुराधर्क्षयो-
र्विश्वेंद्वोर्हरि पित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः ।
स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथोपांत्ययोः
खेटे तत्र गते तुरीयचरणाद्ययोर्वा तृतीयद्वयोः ॥ ५६ ॥

( अन्वयः ) विरिंच्यभिजितोः याम्यानुराधर्क्षयोः विश्वेन्द्वोः हरिपित्र्ययोः हस्तोत्तराभाद्रयोः स्वातीवारुणयोः निर्ऋतिभादित्योः तथा उपान्त्योः, असौ अन्योन्यं ( परस्परं ) ग्रहकृतो वेधो भवेत् तत्र तुरीयचरणाद्ययोः वा तृतीयद्वयोः गते खेटे अन्योन्यं वेधो भवेत् ॥ ५६ ॥

अर्थः–रोहिणी और अभिजित्का वेध है, भरणीका और अनुराधाका वेध है, उत्तराषाढ़ा और मृगशिरका वेध है; श्रवणका और मघाका वेध है, हस्तका और उत्तराभाद्रपदाका वेध है, स्वातीका और शतभिषाका वेध है, मूलको और पुनर्वसुकावेध है, उत्तराफाल्गुनीका और रेवतीका वेध है चौथे चरणका पहले चरणके साथ होता है और उसी प्रकार दूसरे चरणका तीसरे चरणके साथ होता है और उसी प्रकार दूसरे चरणका तीसरे चरणके साथ परस्पर वेध होता है। ऐसे ग्रहसे किया वेध जानना जैसे अभिजित् पर कोई ग्रह हो तो रोहिणी विद्ध जाननी। ऐसे ही चरण वेधका उदाहरण जैसे पुनर्वसुके चौथे चरणपर कोई ग्रह होवै तो मूलका पहला चरण विद्ध जानना ॥ ५६ ॥

सप्तशलाका वेधचक्र—

शाक्रेऽब्जे शतभानिले जलशिवे पौष्णार्यमर्क्षे वसु-
द्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे मिथः ।
हस्तोपांतिमभे विधातृविधिभे मूलादिती त्वाष्ट्रभा-
जांघ्री याम्यमघे कृशानुहरिभे विद्धे कुभृद्रेखिके ॥५७॥

( अन्वयः ) अद्रिरेखे किन्तु सप्तशलाका चक्रे, शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्क्षे वसुद्वीशे वैश्वसुधांशुभे हयभगे तथा सार्पानुराधे हस्तोपान्तिमभे विधातृविधिभे मूलादितित्वाष्ट्रभेजांघ्री याम्यमघे कृशानुहरिभे मिथोऽन्योन्यं विद्धे भवतः इति ॥ ५७ ॥

अर्थः-ज्येष्ठा और पुष्य का शतभिषा और स्वाती का, पूर्वाषाढ़ा और आर्द्रा का, रेवती और उत्तराफाल्गुनी का, धनिष्ठा और विशाखा का. उत्तराषाढ़ा और मृगशिरका अश्विनी पूर्वाफाल्गुनी का; आश्लेषा और अनुराधा का, हस्त और उत्तराभाद्रपदा का: रोहिणी और अभिजित् का, मूल और पुनर्वसु का: चित्रा और पूर्वाभाद्रपदा का, भरणी और मघा का, कृत्तिका और श्रवण का परस्पर वेध होता है। यह सप्तशलाका चक्र के वेध है ॥ ५७ ॥

क्रूरग्रहोंसे आक्रांत आदि दोष—

ऋणानि क्रूरविद्धानि क्रूरभुक्तादिकानि च।
भुक्त्वा चंद्रेण भुक्तानि शुभार्हाणि प्रचक्षते ॥ ५८ ॥

( अन्वयः ) क्रूरविद्धानि यानि ऋक्षाणि क्रूरभुक्तानि च, ऋक्षाणि चन्द्रेण भुक्त्वा भुक्तानि शुभार्हाणि प्रचक्षते इति ॥ ५८ ॥

अर्थः-क्रूर ग्रहसे विद्ध हुए, क्रूरग्रहसे छूटे हुए, क्रूरग्रह जिसपर प्राप्त होने वाला होय और उत्पातोंसे दूषित ऐसे नक्षत्र यदि चन्द्रमासे भोग कर छोड़ दिये गये हों तो शुभ कहते हैं ॥ ५८ ॥

लत्ता दोषका प्रमाण-

ज्ञराहुपूर्णेन्दुसिताः स्वपृष्ठे भं सप्तगोजातिशरैर्मितं हि।
संलत्तयंतेऽर्कशनीज्यभौमाः सूर्याष्टतर्काग्निमितं पुरस्तात् ५९

( अन्वयः ) सप्तगोजाति शरैर्मितंभं स्वपृष्ठे हिनिश्चयेनज्ञराहुपूर्णेन्दुसिता संलत्तयन्ते, सूर्याष्टतर्काग्निमितंभं अर्कशनीज्यभौमाः पुरस्तात् संलत्तयन्ते ॥५९॥

अर्थः-जिस नक्षत्र पर बुध हो उसके पीछे सातवें ७ नक्षत्र पर लात मारता है। और जिस नक्षत्र पर हो तिससे आगेके नवें नक्षत्रपर लात मारता है। पूर्ण चन्द्रमा पीछेके बाइसवें २२ नक्षत्रपर लात मारता है। शुक्र अपने पीछेवाले पांचवें नक्षत्रको लात मारता है। सूर्य आगेके बारहवें नक्षत्रको लात मारता है। शनिश्चर आगे के आठवें नक्षत्र पर लात मारता है। बृहस्पति आगेके छठे

नक्षत्र पर लात मारता है। मंगल आगेके तीसरे नक्षत्र पर लात मारता है। यह लत्ता योग कहाता है ॥ ५९ ॥

पात दोष विचार—

हर्षणवैधृतिसाध्यव्यतिपातजगंडशूलयोगानाम्।
अंते यन्नक्षत्रं पातेन निपातितं तत्स्यात ॥ ६० ॥

(अन्वयः) हर्षणवैधृतिसाध्यव्यतिपातकगंडशूलयोगानाम् अन्ते यन्नक्षत्रं पातेन निपातितं स्यात् ॥ ६० ॥

अर्थः-हर्षण वैधृति साध्य व्यतीपात गंड शूल इन योगों के अन्त में जो नक्षत्र होवे उसमें पातदोष लगता है ॥ ६० ।

महापात दोष विचार—

पंचास्याजौगोमृगौ तौलिकुम्भौ कन्यामीनौ कर्क्यली चापयुग्मे।
तत्रान्योन्यं चंद्रभान्वोर्निरुक्तं क्रांतेः साम्यं नो शुभं मंगलेषु॥६१॥

(अन्वयः)-पञ्चास्याजौ गोमृगौ तौलिकुम्भौ कन्यामीनौ कर्क्यली चापयुग्मे चन्द्रभान्वोः तत्रान्योन्यं क्रान्तेः साम्यं निरुक्तं तन्मंगलेषु शुभं नो इति ॥ ६१ ॥

अर्थः-सिंह, मेष, वृष, मकर, तुला, कुम्भ, कन्या मीन, कर्क, वृश्चिक, धन मिथुन इन राशियों पर चन्द्रमा सूर्य एक रेखा पर स्थित हो तो क्रांति साम्यदोष होता है यह सब शुभ कार्यों में वर्जित है ॥ ६१ ॥

खार्जूर दोष विचार-

व्याघातगंडव्यतिपातपूर्वशूलांत्यवज्रे परिघातिगंडे।
योगे विरुद्धे त्वभिजित्समेतः खार्जूरमर्काद्विषमे शशी चेत्॥६२॥

(अन्वयः) व्याघातगण्डव्यतिपातपूर्वशूलान्त्यवज्रे परिघातिगंडे चेत् योगे विरुद्धे सति अर्थात् शशी चन्द्रः अभिजित्समेता विषमर्क्षगस्तदा एकार्गलाख्यो दोषः हि निश्चयेन स्यात् ॥ ६२ ॥

अर्थः-व्याघात गंड व्यतीपात विष्कंभ शूलवैधृति वज्र परिघ अतिगंड इन योगों में जिस दिन कोई योग होवे उस दिन जिस नक्षत्र पर सूर्य हो उस नक्षत्र से अभिजित् समेत गिने जिस दिन चन्द्रमा विषम नक्षत्र पर हो उसी दिन खार्जूर (एकार्गल) दोष होता है ॥ ६२ ॥

उपग्रह दोष विचार-

शराष्टदिक्शक्रनगातिधृत्यस्तिथिधृतिश्च प्रकृतेश्च पंच ।
उपग्रहाः सूर्यभतोऽब्जताराः शुभा न देशे कुरुबाह्लिकानाम् ६३

( अन्वयः ) सूर्यभतः सकाशात् अब्जताराः शराष्टदिक्शक्रनगातिधृत्यः तिथिः धृतिश्च च पुनः प्रकृतेः पञ्च एते उपग्रहाः भवन्ति ते कुरुबाह्लिकानां देशे शुभा न भवन्तीति ॥ ६३ ॥

अर्थः-सूर्यके नक्षत्रसे पांचवें, आठवें दशवें, चौदहवें, सातवें, उन्नीसव, पन्द्रहवें, अठारहवें, इक्कीसवें, बाइसवें, तेइसवें, चौबीसवें, पच्चीसव, ऐसी गिनती के नक्षत्र पर चन्द्रमा होवे तो उपग्रह दोष होता है। यह कुरु देश और बाह्लिक देशमें शुभ नहीं है ॥ ६३ ॥

पात उपग्रह लत्ता इनका अपवाद और अर्धयाम-

पातोपग्रहलत्तासु नेष्टोंऽघ्रिः खेटपत्समः ।
वारस्त्रिघ्नोऽष्टिभिस्तष्टः सैकः स्यादर्धयामकः ॥ ६४ ॥

( अन्वयः ) पातोपग्रहलत्तासु खेटपत्समः अंघ्रिः नेष्टः स्यात् वारस्त्रिघ्नः अष्टभिस्तष्टः सैकः तदा अर्धयामको भवतीति ॥ ६४ ॥

अर्थः-पातदोष उपग्रहदोष लत्तादोष इन तीन दोषोंमें नक्षत्रके जिस चरण पर कोई ग्रह हो दूषित नक्षत्रका वही चरण श्रेष्ठ नहीं होता। वार के अंकको तीनसे गुणा करै फिर आठका भाग देवै जो अंक बचै तिसमें एक जोड़ दे उतने ही संख्यक अर्धयाम होता ह ॥ ६४ ॥

कुलिक दोष विचार-

शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिका रवेः ।
रात्रौ निरेकास्तिथ्यंशाऽशनौ चांत्योपि निंदिताः॥६५॥

( अन्वय. ) रवेः शक्रार्कदिग्वसुरसाब्ध्यश्विनः कुलिकाः स्युः ते रात्रौ निरेकाः कार्याः शनौ तिथ्यंशाः ॥ ६५ ॥

अर्थः-रविवार के दिन में चौदहवां, रात में तेरहवां मुहूर्त, चन्द्रवार को दिन में बारहवां, रात्रिमें ग्यारहवां, मंगल को दिन में दशवां रात्रि में नववां बुधवार को दिन में आठवां, रात्रि में सातवां बृहस्पति को दिन में छठा, रात्रि

में पांचवां शुक्रवार को दिन में चौथा, रात्रि में तीसरा शनिवार को दिन में दूसरा, रात्रि में प्रथम मुहूर्त्त कुलिक होता है शनि को रात में अन्तिम मुहूर्त्त भी निन्दित है। यह विवाहादि शुभ कर्ममें निंदित है॥ ६५॥

दग्धतिथ्याख्य विचार—

चापांत्यगे गोघटगे पतंगे कर्काजगे स्त्रीमिथुने स्थिते च।
सिंहालिगे नक्रघटे समाः स्युस्तिथ्यो द्वितीयाप्रमुखाश्च दग्धाः६६

( अन्वयः ) पतङ्गे सूर्ये चापान्त्यगे गोघटगे कर्काजगे च पुनः स्त्रीमिथुने स्थिते सिंहालिगे नक्रघटे तदा द्वितीयाप्रमुखाः च पुनः तिथ्यः दग्धाःस्युः॥६६॥

अर्थः—धन और मीनके सूर्यमें द्वितीया, वृष कुम्भके सूर्यमें चतुर्थी कर्क मेषके सूर्यमें छठ, कन्या मिथुनके सूर्यमें अष्टमी सिंह वृश्चिकके सूर्यमें दशमी, मकर तुलाके सूर्यमे द्वादशी दग्ध तिथि होती हैं॥ ६६॥

जामित्र दोष—

लग्नाच्चंद्रान्मदनभवनगे खेटे न स्यादिह परिणयनम्।
किंवा बाणाशुभगमितलवगे जामित्रं स्यादशुभकरमिदम् ६७

( अन्वयः ) लग्नाच्चन्द्रान् मदनभवनगे खेटे इह परिणयनं न स्यात् किंवा बाणाशुभगमितलवगे सति जामित्रं स्यात् इदं अशुभकरं स्यात्॥ ६७॥

अर्थः—लग्न से अथवा चन्द्रमासे सातवें स्थानमें कोई ग्रह का हो तो विवाह शुभ नहीं है अथवा विवाहके नवांशसे पचपनवें ५५ नवमांश पर कोई ग्रह हो तो सूक्ष्म जामित्र दोष होता है, यह जामित्र दोष अशुभ करता है। ६७॥

एकार्गल दोष—

एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः।
नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथार्काभ्युदये तु दोषा॥६८॥

( अन्वयः ) चन्द्रार्कबलोपपन्ने लग्ने सति एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः नश्यन्ति तु पुनः यथा अर्काभ्युदये दोषाः नश्यन्तीति॥६८॥

अर्थः—चन्द्रमा और सूर्य के बल से युक्त लग्न में एकार्गल दोष, उपग्रह दोष पातदोष, लत्तादोष जामित्रदोष कर्त्तरी दोष, उदयास्त सम्बन्धी संपूर्ण दोष नष्ट हो जाते हैं जैसे सूर्य के उदय में रात्रि नष्ट हो जाती है॥ ६८॥

देश विशेष दोषों का अपवाद-

उपग्रहर्क्षं कुरुबाल्हिकेषु कलिंगवंगेषु च पातितं भम् ।
सौराष्ट्रशाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे ६६

(अन्वयः) कुरुवाल्हिकेषु देशेषु त्यजेत् कलिङ्गवंगेषु पातितभं त्यजेत् सौराष्ट्रशाल्वेषु च लत्तितभं सर्वदेशेषु ( तु ) किल निश्चयेन विद्धं त्यजेदिति ॥ ६६ ॥

अर्थः—उपग्रहदोष, कुरुदेश और बाल्हिक देशमें वर्जित है। कलिंग और वंगदेशमें पातदोष वर्जित है। सौराष्ट्र और शाल्वदेश में लत्तादोष वर्जित है और सम्पूर्ण देश में वेधको अवश्य त्याग करै ॥ ६६ ॥

दश दोषोंके बनाने का क्रम-

शशांकसूर्यर्क्षयुतेर्भशेषे खं भू युगांगानि दशेशमिथ्यः ।
नागेंदवोऽकेंदुमिता नखाश्चेद्भवन्ति चैते दशयोगसंज्ञाः॥७०॥

( अन्वयः ) शशांकसूर्यर्क्षयुतेः भशेषे खंभूयुगाङ्गानि दशेशतिथ्यः नागेन्दवोऽर्केन्दुमिता च पुनः नखाः ( च ) एते दशयोगसंज्ञाः भवन्तीति ॥ ७० ॥

अर्थः—अश्विन्यादि चन्द्रमा और सूर्य के नक्षत्र की संख्या जोड़ कर सत्ताईस का भाग देवे यदि० । १ । ४ । ६ । १० । ११ । १५ । १८ । १६ । २० इनमें से कोई अंक शेष रहे तो दश योग समझ लेना ॥ ७० ॥

दश योग का फल और परिहार-

वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादाः क्षति-
र्योगांके दलिते समे मनुयुतेऽथौजे तु सैकेऽर्धिते ।
भं दासादथ सम्मितास्तु मनुभी रेखाः क्रमात्संलिखे-
द्वेधोऽस्मिन् ग्रहचंद्रयोर्न शुभदः स्यादेकरेखास्थयोः॥७१॥

(अन्वयः) समे योगांके दलिते अथ ओजे मनुयुते (तु) सैके अर्धिते दासाद् भं वाताभ्राग्निमहीपचोरमरणं रुग्वज्रवादाः क्षतिः तु पुनः मनुभिः सम्मिताः रेखाः क्रमात्संलिखेत् अस्मिन् ग्रहचन्द्रयोः एकरेखास्थयोः वेधः शुभदः न स्यादिति ॥ ७१ ॥

अर्थः-शून्य बचै तो घातदोष, एक बचै तो अभ्रदोष, चार बचै तो अग्नि छः बचै तो रोग दोष, दश बचै तो चौर दोष, ग्यारह बचै तो मृत्युदोष, पंद्रह बचै तो रोगदोष अठारह बचै तो वज्रदोष, उन्नीस बचै तो कलह दोष, बीस बचै तो द्रव्यनाश दोष यह दश योगका फल जानना जो चन्द्र नक्षत्र और सूर्यके नक्षत्रका योग समांक होय तो उसको आधा करके १४ मिला दे उतनी संख्या अश्विनी से गिनै। अब विषमांक कहते हैं चन्द्रसूर्यके नक्षत्र का योग विषम हो तो एक और युक्त कर दे फिर आधा करै जो शेष बचें उसको अश्विनी से गिनें अब चक्र कहते हैं। चौदह रेखा क्रम से लिखै एक रेखा पर ग्रह चन्द्रमा होवै तो वेध होता है यह शुभप्रद नहीं है ॥७१॥

बाणदोष कथन-

लग्नेनाढ्या याततिथ्योऽङ्कतष्टाः शेषे नागद्व्यब्धितर्केन्दुसंख्ये।
रोगो वह्नी राजचौरौ च मृत्युर्बाणश्चायं दाक्षिणात्यप्रसिद्धः ७२

(अन्वयः) लग्नेन आढ्या याततिथ्योऽङ्कतष्टाः नागद्व्यब्धितर्केन्दुसङ्ख्ये शेषे सति रोगः बाणः वह्निः राजचौरौ च पुनः मृत्युः बाणः अयं बाणश्च दाक्षिणात्यप्रसिद्ध इति ॥ ७२ ॥

अर्थः-जिस दिनमें बाणका विचार करना होवै उस दिन शुक्ल पक्ष की प्रतिपदा से बीती हुई सब तिथियों को वर्तमान दिनतक गिनकर लग्न में जोड़े फिर नवका भाग देवे जो आठका अंक बचे तो रोग बाण, दो बचे तो अग्नि बाण, चारबचे तो राजबाण, छः बचे तो चौरबाण, एक बचे तो मृत्युबाण यह दाक्षिणात्य (महाराष्ट्रों) में प्रसिद्ध है ॥ ७२ ॥

बाण दोष अपवाद-

रसगुणशशिनागाब्ध्याढ्यसंक्रांतियातां-
शकमितिरथ तष्टांकैर्यदा पंच शेषाः।
रुगनलनृपचोरा मृत्युसंज्ञश्च बाणो
नवहृतशरशेषे शेषकैक्ये सशल्यः ॥ ७३ ॥

(अन्वयः) रसगुणशशिनागाब्ध्याढ्यसंक्रान्तियातांशकमितिः अथाङ्कैः तष्टा सती यदा पञ्च शेषाः स्युः तदा रुगनलनृपचोरा बाणाः मृत्युसंज्ञश्च बाणः शेषकैक्ये नवहृतशरशेषे सति सशल्यो बाणो भवतीति ॥ ७३ ॥

अर्थः-सूर्य की संक्रांति के जितने अंश गये हों उनको छ ६ तीन ३ एक १ आठ ८ चार ४ इन अंको में जोड़ कर फिर सब अंकोंमें नवका भाग देने से जो पांच बचे तो रोग अग्नि नृप चौर मृत्यु यह बाणक्रम से जाने। नवका भाग देने से जो कुछ बाकी रहें, उन बचे हुए अंकोंकी जोड के नवका भाग दे यदि पांच बचे तो सशल्य बाण जानना ॥ ७३ ॥

समय भेद वार भेद और कर्म से तीन प्रकार का बाण परिहार-

रात्रौ चौररुजौ दिवा नरपतिर्वह्निः सदा सन्ध्ययो-
र्मृत्युश्चाथ शनौ नृपो विदि मृतिर्भौमेऽग्निचोरौ रवौ।
रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे
वर्ज्याश्च क्रमतोबुधै रुगनलक्ष्मापालचोरामृतिः ॥ ७४ ॥

( अन्वयः ) चौररुजौ बाणौ रात्रौ त्याज्यौ दिवा नरपतिः सदा दिवारात्रौ वन्हिः बाणस्त्याज्य. सन्ध्ययोः मृत्युश्च बाणस्त्याज्यः, अथ शनौ नृपो बाणस्त्याज्यः विदि मृतिर्बाणः त्याज्यः भौमे अग्निचोरौ त्याज्यौ रवौ रोगो बाणस्त्याज्यः अथ व्रतगेहगोपनृपसेवायानपाणिग्रहे रुगनलक्ष्मापालचौरा समृतिः क्रमत एते बुधै वंर्ज्या इति ॥ ७४ ॥

अर्थः—रात्रि में चौरवाण और रोगवाण वर्जित है दिन में राजवाण वर्जित है, अग्नि बाण दिन रात हमेशा वर्जित है। प्रातःकाल सायंकाल दोनों संध्याओं में मृत्युवाण वर्जित है। शनिश्चर को राजवाण, बुधको मृत्युवाण, मंगल को अग्निवाण और चौर बाण, रविवार को रोगवाण इस प्रकार यह उक्त दिनों में वर्जित है। यज्ञोपवीत में रोग बाण, घरके छावने बनवाने में अग्नि बाण, राजसेवा में राजवाण, यात्रा में चौरवाण और विवाह में मृत्युवाण वर्जित है ॥ ७४ ॥

ग्रहों की दृष्टि—

त्र्याशं त्रिकोणं चतुरस्रमस्यं पश्यंति खेटाश्चरणाभिवृद्ध्या ॥
मंदोगुरुर्भूमिसुतः परे च क्रमेण सम्पूर्णदृशो भवन्ति ॥७५॥

( अन्वयः) त्र्याशं त्रिकोणं चतुरस्रं अस्तं खेटाः ग्रहाः चरणाभिवृद्ध्या पश्यन्ति, मन्दः गुरु भूमिसुतः च पुनः परे ग्रहाः क्रमेण सम्पूर्णदृशो भवन्तीति॥७५॥

अर्थः–सब ग्रह अपने स्थानसे तीसरे दसवें स्थानको एक चरण दृष्टि से देखते हैं। नवमें पांचवें स्थान को दो चरण से देखते हैं। चौथे आठवें स्थान को तीन चरण से देखते हैं। सातवें स्थान को पूर्ण दृष्टिसे देखते हैं। शनैश्चर अपने से तीसरे दसवें स्थान को चार चरण से देखता है बृहस्पति पांचवें नववे स्थान को चार चरण करके देखता है मंगल चौथे और आठवें स्थान को चार चरण करके देखता है सूर्य चन्द्रमा बुध शुक्र ये सातवें स्थान को पूर्ण दृष्टि से देखते हैं ॥ ७५ ॥

उदयास्तादि शुद्धि—

यदा लग्नांशेशो लवमथ तनुं पश्यति युतो
भवेद्वायं वोढुः शुभफलमनल्पं रचयति ।
लवद्यूनस्वामीलवमदनभं लग्नमदनं
प्रपश्येद्वा वध्वाः शुभमितरथा ज्ञेयमशुभम् ॥ ७६ ॥

लवेशो लवं लग्नपो लग्नगेहं प्रपश्येन्मिथो वा शुभं स्याद्वरस्य ।
लवद्यूनपोऽशंद्युनं लग्नपोऽस्तंमिथोऽवेक्षतेस्याच्छुभंकन्यकायाः ७७

लवपतिशुभमित्रं वीक्षतेंशं तनुं वा
परिणयनकरस्य स्याच्छुभं शास्त्रदृष्टम् ।
मदनलवपमित्रं सौम्यमंशं द्युनं वा
तनु मदनगृहं चेद्वीक्षते शर्मवध्वाः ॥ ७८ ॥

(अन्वयः) यदा लग्नांशेशः लवं अथ तनुं पश्यति वा अयं युतो भवेत्तदा वोढुर्वरस्य अनल्पं फलं रचयति लवद्यूनस्वामी लवमदनभं वा लग्नमदनं प्रपश्येत्तदा वध्वाः कन्यकायाः शुभं स्यात् इतरथा अशुभं ज्ञेयम् । ॥ ७६ ॥

(अन्वयः) लवेशः लवं लग्नपः लग्नगेहं प्रपश्येत् तदा वरस्य शुभं स्यात् अथवा मिथः प्रपश्येत् तदापि वरस्यशुभं स्यात् लग्नद्यूनपः अंशद्युनं लग्नपः अस्तं ईक्षते तदा कन्यकायाः शुभं स्यात् वा मिथः प्रपश्येत् तदा कन्यायाः शुभं स्यादिति ॥ ७७ ॥

(अन्वयः) लग्नपतिशुभमित्रं अंशं वा तनूं वीक्षते तदा परिणयनकरस्य शास्त्रदृष्टं शुभं स्यात् मदनलवपमित्रं सौममंशंवा द्युनं तनुमदनगृहंचेद् वीक्षते तदा वध्वाः कन्यकायाः शर्म कल्याणं न वाच्यमिति ॥ ७८ ॥

अर्थः—जब लग्नका नवांशेश नवांश को या लग्नको देखता होय या नवमांश से अथवा लग्नसे युक्त होय तो वरके लिये शुभ फल को देनेवाला होता

है। नवांशसे सप्तम नवांशका स्वामी नवांशराशि से सप्तमराशिको देखता होवै या युक्तहोवै अथवा लग्न से सप्तम भावको देखता होय या सप्तम भाव से युक्त होय तो वधूके लिए विशेष शुभ फल देने वाला होता है और जो लग्न नवमांश स्वामी नवमांश को या लग्न को न देखता होय या युक्त हीन होय तो वरके लिये अशुभ फलप्रद है और नवमांश से सप्तम नवमांश का स्वामी नवांश से सप्तमको या लग्न से सप्तम भावको न देखता होवै या युक्त हीन होय तो वधूके लिये अशुभ है ॥ ७६ ॥ नवांशका स्वामी नवांशको और लग्न का स्वामी लग्नको देखता होय तो वरको शुभ है अथवा परस्पर नवांशका स्वामी लग्नको देखता होवै और लग्नेश नवांशको देखता होवै तो वरके वास्ते शुभ है। नवमांशसे सप्तम नवमांश का स्वामी अंशसे सप्तम नवमांश को देखता होवै और लग्न स्वामी लग्न से सप्तम घरको देखता होय तो कन्याको शुभ है अथवा परस्पर नवमांशसे सप्तम भाव का स्वामी लग्नसे सप्तम स्थानको देखता होवै और लग्न से सप्तम का स्वामी नवमांशसे सप्तमको देखता होवे तब भी कन्याका ही शुभ है। यह विचार लग्नविषयका है ॥७७॥ चन्द्रमा बुध बृहस्पति शुक्र इन ग्रहों में से कोई ग्रह अंशेश का मित्र हो और लग्न के नवमांश की राशिको या लग्नको देखता हो तो भी वरको शुभ है और जो चन्द्रमा बुध बृहस्पति शुक्र इन शुभ ग्रहो में से कोई सातवें स्थान के नवमांश के स्वामी का मित्र हो और अपने नवमांश या राशिको देखता हो या सातवें स्थानको देखता हो तो कन्या का विवाह शुभ है ॥ ७८ ॥

अर्क संक्रांति दोष-

विषुवायनेषु परपूर्वमध्यमान् दिवसांस्त्यजेदितरसंक्रमेषुहि ॥
घटिकास्तु षोडश शुभक्रियाविधौ परतोपि पूर्वमपिसंत्यजेद्बुधः ॥७९॥

(अन्वयः) विषुवायनेषु शुभक्रियाविधौ परपूर्वमध्यमान् दिवसान् त्यजेत् इतरसंक्रमेषु हि निश्चयेन परतः अपि पूर्वमपि षोडशषोडशघटिकाः (तु) बुधः संत्यजेदिति ॥ ७९ ॥

अर्थः—मेष तुला कर्क मकर संक्रांति विषे प्रथम मध्यम अन्त तीन दिनों को त्यागै और बाकी आठ संक्रांतियों में प्रथम और अन्तमें १६ सोलह २ घड़ी शुभकर्म में त्याग करै ॥ ७९ ॥

संक्रांति के घड़ियोंका विवरण—

देवद्वयं कृतवोऽष्टाष्टौ नाड्योंकाः खनृपाः क्रमात् ।
वर्ज्याः संक्रमणेऽर्कादेः प्रायोऽर्कस्यातिनिन्दिताः ॥८०॥

( अन्वयः ) अर्कादिः संक्रमणे देवद्वयङ्कर्तवोऽष्टाष्टौ नाड्यः खनृपाः अंकाः क्रमात् वर्ज्याः प्रायो वाहुल्येन अर्कस्य अतिनिन्दिताः भवन्ति ॥ ८० ॥

अर्थः-सूर्यसंक्रांतिसे पहले पीछे तेतीस घड़ी, चन्द्रमा की संक्रांति से पहले पीछे दो दो घड़ी, मंगलकी संक्रांति से पहले पीछे नव घड़ी, बुधकी संक्रांति से पहले पीछे छः घड़ी, बृहस्पति की संक्रांतिसे पहले पीछे अठासी घड़ी, शुक्र की संक्रांतिसे पहले पीछे नव घड़ी, शनिश्चर की संक्रांति से पहले पीछे एकसौ साठ घड़ी वर्जित हैं ॥ ८० ॥

पंग्वन्धवधिरादयलग्न—

**घस्रे तुलाली बधिरौ मृगाश्वौ रात्रौ च सिंहाजवृषा दिवांधाः ।**
**कन्यानृयुक्कर्कटका निशांधाः दिने घटोऽन्त्यो निशि पंगुसंज्ञः ८१**

( अन्वयः ) तुलाली घस्रे बधिरौ स्मृतौ, मृगाश्वौ रात्रौ बधिरौ भवतः, च पुनः सिंहाजवृषाः दिवान्धा भवन्ति कन्यानृयुक्कर्कटका निशान्धा उक्ताः घटः दिने पंगुसंज्ञः अन्त्यः निशिपंगुसंज्ञो भवतीति ॥ ८१ ॥

अर्थः—दिनमें तुला वृश्चिक रात्रिमें धनु मकर बधिर ( बहरे ) होते हैं। दिन में सिंह मेष वृष और रात्रिमें कन्या मिथुन कर्क अन्ध होते हैं। दिनमें कुम्भ और रात्रिमें मीन ये दो लग्न पंगु ( लंगडे ) हैं ॥ ८१ ॥

तथा अन्य आचार्योंका मत—

**बधिरा धन्वितुलालयोऽपराह्णे मिथुनं कर्कटकोऽङ्गना निशांधाः**
**दिवसांधा हरिगोक्रियास्तुकुब्जास्मृगकुम्भांतिमभानिसंध्ययोर्हि॥**

( अन्वयः ) धन्वितुलालयः अपराह्णे बधिराः स्मृताः मिथुनं कर्कटोऽङ्गना निशान्धाः भवन्ति तु पुनः हरिगोक्रियाः दिवसान्धाः स्युः मृगकुम्भान्तिमभानि हिनिश्चयेन सन्ध्ययोः कुब्जाः पंगवः स्मृता इति ॥ ८२ ॥

अर्थः—धन तुला वृश्चिक यह लग्न अपराह्णमें बधिर ( बहरे ) रात्रिमें मिथुन कर्क कन्या यह लग्न अंध हैं। दिनमें सिंह वृष मेष ये लग्न अंध हैं प्रातःकाल और सायंकाल मकर कुम्भ मीन यह लग्न कुबड़े हैं ॥ ८२ ॥

तथा फल—

**दारिद्र्यं बधिरतनौ दिवांधलग्ने**
**वैधव्यं शिशुमरणं निशांधलग्ने ।**

पंग्वंगे निखिलधनानि नाशमीयुः
सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ॥८३॥

( अन्वयः ) बधिरतनौ दारिद्र्यं दिवांधलग्ने वैधव्यं निशान्धलग्ने शिशुमरणं पंग्वगे निखिलधनानि नाशम् ईयुः सर्वत्र सर्वस्मिन् अधिपगुरुदृष्टिभिः दोषो न भवेत् ॥ ८३ ॥

अर्थः-बधिर ( बहरे ) लग्नमें विवाह हो तो वर कन्या दरिद्र हों दिवांध लग्न में विवाह हो तो कन्या रण्डा होती है। रात्रि के अंधे लग्न में विवाह हो तो सन्तान का मरण होता है। पंगुले में विवाह हो तो धन का नाश होता है। यदि इन लग्नोंको बृहस्पति देखता हो या लग्न स्वामी की दृष्टि हो तो विवाह शुभ है ॥ ८३ ॥

विवाह में विहित नवमांश कथन—

कार्मुकतौलिककन्यायुग्मलवे झषगे वा ।
यर्हि भवेदुपयामस्तर्हि सती खलु कन्या ॥ ८४ ॥

( अन्वयः ) कार्मुकतौलिककन्या युग्मलवे वा झषगे यार्हि उपयामो भवेत्तर्हि खलु निश्चयेन सा कन्या सती भवेदिति ॥ ८४ ॥

अर्थः-धन कन्या तुला मिथुन इनके नवमांश में विकल्प करके मीन के नवमांश में विवाह हो तो कन्या पतिव्रता होय ॥ ८४ ॥

विहित नवांश में क्वचिन्निषेध—

अंत्यनवांशे न च परिणेया काचन वर्गोत्तममिह हित्वा ।
नो चरलग्ने चरलवयोगं तौलिमृगस्थेशशभृति कुर्यात् ॥८५॥

( अन्वयः ) अन्त्यनवांशे काचन कन्या न परिणेया न विवाह्या वर्गोत्तमं इह हित्वा चरलग्ने नो चरलवयोगं नो शशभृति चन्द्रे तौलिमृगस्थे सति तदा परिणयनं कुर्यादिति ॥ ८५ ॥

अर्थ -अन्त के नवमांश में कन्या का विवाह करना नहीं चाहिये परन्तु अंत का नवमांश वर्गोत्तम हो तो विवाह श्रेष्ठ है। तुला, मकर राशि के चन्द्रमा हो तो चर लग्न के चर नवमांश में विवाह करना श्रेष्ठ नहीं है ॥ ८५ ॥

लग्न भंगयोग—

व्यये शनिः खेऽवनिजस्तृतीये भृगुस्तनौ चंद्रखला न शस्ता।
लग्नेट्कविग्लौश्चरिपौ मृतौ ग्लौर्लग्नेट्शुभारश्च मदे च सर्वे ८६

(अन्वयः) शनिः व्यये अवनिजः खे भृगुस्तृतीये चन्द्रखलास्तनौ तदा शस्ताः न लग्नेट् कविग्लौश्च रिपौ मृतौ न शस्ताः ग्लौश्चन्द्रः लग्नेट् शुभारश्च सर्वे मदे सप्त मस्थानि सति न शस्ता इति ॥ ८६ ॥

अर्थः-विवाह के लग्न से बारहवें शनि, दशवें मंगल, तीसरे शुक्र, लग्न में चन्द्रमा और क्रूरग्रह अच्छे नहीं होते। लग्नस्वामी शुक्र चन्द्रमा छठे अच्छे नहीं होते, चन्द्रमा लग्न स्वामी, सौम्यग्रह और मंगल ये आठवें अच्छे नहीं हैं। सातवें तो कोई ग्रह शुभ नहीं हैं ॥ ८६ ॥

रेखाप्रदरव्यादिग्रहाः-

त्र्यायाष्टषट्सु रविकेतुतमोऽर्कपुत्रा-
स्त्र्यायारिगः क्षितिसुतो द्विगुणायगोऽब्जः।
सप्तव्ययाष्टरहितौ ज्ञगुरू सितोऽष्ट-
त्रिद्यूनषड्व्ययगृहान्परिहृत्य शस्तः ॥ ८७ ॥

(अन्वयः) रविकेतुतमोर्कपुत्रास्त्र्यायाष्टषट्सु क्षितिसुतः त्र्यायारिगः अब्जः द्विगुणायगः ज्ञगुरू सप्तव्ययाष्टरहितौ सितः, अष्टत्रिद्यूनषड्व्ययगृहान् परिहृत्य तदा शस्तः स्यादिति ॥ ८७ ॥

अर्थः-तीसरे ग्यारहवे आठवें छठे इन स्थानों में सूर्य केतु राहु शनि ये ग्रह शुभ होते हैं। तीसरे छठे ग्यारहवें स्थान में मंगल शुभ हैं। दूसरे तीसरे ग्यारहवें इन स्थान में चन्द्रमा शुभ हैं। सातवें आठवें स्थानको छोड़कर और स्थान में बुध बृहस्पति शुभ होते हैं। आठवें तीसरे सातवें छठे बारहवें स्थानोंको छोड़ कर शुक्र शुभ है ॥ ८७ ॥

कर्त्तरी आदि महादोषों का अपवाद-

पापौ कर्तरिकारकौ रिपुगृहे नीचास्तगौ कर्तरी
दोषो नैव सितेऽरिनीचगृहगे तत्षष्ठदोषोऽपि न।

भौमेऽस्ते रिपुनीचगे नहि भवेद्भौमोऽष्टमो दोषकृ-
न्नीचे नीचनवांशके शशिनि रिःफाष्टारिदोषोऽपि न ८८

( अन्वयः) कर्तरिकारको पापौ रिपुगृहे नीचास्तगौ तदा कर्तरी दोषः नैव सिते अरिनीचगृहगे तदा षष्ठदोषः अपि न भवेत् भौमे अस्ते रिपुनीचगे भौमोऽष्टमः हि निश्चयेन दोषकृत् न भवेत् शशिनि चन्द्रे नीचे नीचनवांशके तदा रिःफाष्ट दोषः अपि भवेदिति ॥ ८८ ॥

अर्थः-कर्त्तरी दोष करनेवाले क्रूरग्रह शत्रुस्थानमें स्थित हों अथवा नीच राशि में होवें या अस्त हुए होवें तो कर्त्तरी दोष नहीं है। शत्रु के स्थान नीच राशि इनमें शुक्र स्थित हो तो छठे स्थान स्थित शुक्रका भी दोष नहीं है। अस्त हुआ हो शत्रु की राशि राशि पर स्थित हो नीच राशि पर स्थित हो इस प्रकार का मंगल आठवें स्थान में स्थित हो तो दोष नहीं है। नीच राशि पर स्थित हो और नीच के नवमांश में स्थित हो तो छठे आठवें बारहवें चन्द्रमा का भी दोष नहीं होता ॥ ८८ ॥

नव दोषोंका परिहार—

अब्दायनर्तु तिथिमासभपक्षदग्ध-
तिथ्यंधकाणबधिरांगमुखाश्च दोषाः
नश्यन्ति विद्गुरुसितेष्विह केन्द्रकोणे
तद्वच्च पापविधुयुक्तनवांशदोषाः ॥ ८९ ॥

( अन्वयः ) विद्गुरुसितेषु इह केन्द्रकोणे स्थितेषु तदा अब्दायनर्तुतिथिमासभपक्षदग्धतिथ्यन्धकाणबधिरांगमुखाश्च दोषाः नश्यन्ति, च पुनः तद्वत् पापविधुयुक्तनवांशदोषो न भवेदिति ॥ ८९ ॥

अर्थः-अब्ददोष १ अयनदोष २ ऋतुदोष ३ रिक्तादि तिथिदोष ४ मासदोष ५ नक्षत्रदोष ६ पक्षदोष ७ दग्धतिथ्यादि दोष ८ अन्धलग्नादिदोष ९ यह सम्पूर्ण दोष बुध बृहस्पति शुक्र सप्तम रहित केन्द्रमें अथवा नवम स्थानमें स्थित हों तो नाशको प्राप्त होते हैं। पापयुक्त चन्द्रमा और पापग्रह युक्त नवमांशका भी दोष बुधादिकोंके केन्द्र या कोणमें स्थित होनेसे नाश होते हैं ॥ ८९ ॥

तथा अन्य परिहार—

केंद्रे कोणे जीव आये रवौ वा लग्ने चंद्रे वापि वर्गोत्तमे वा।
सर्वे दोषा नाशमायांति चंद्रे लाभेतद्वद्दुर्मुहूर्तांशदोषाः॥९०॥

(अन्वयः) जीवः केन्द्रे कोणे वा रवौ आये वा लग्ने वर्गोत्तमे अपिवा चन्द्रे वर्गोत्तमे सति तदा सर्वे दोषाः नाशमायान्ति-चन्द्रे लाभे तद्वद्दुर्मुहूर्तांशदोषाः नश्यन्तीति ॥ ९० ॥

अर्थः-प्रथम चौथे पांचवें नवें दशमें स्थानोंमें स्थित बृहस्पति हो तो सम्पूर्ण दोष नाश को प्राप्त होते हैं अथवा सूर्य ग्यारहवें स्थान में हो तो सम्पूर्ण दोष नाशको प्राप्त होवें और चन्द्रमा या लग्न वर्गोत्तमांश में हो तो सब दोष नाश हो जातेहैं। ग्यारहवें चंद्रमा हो तो दुर्मुहूर्त दोष और अशदोष का नाश हो जाता है ९०॥

तथा अन्य दोष परिहार—

त्रिकोणे केंद्रे वा मदनरहिते दोषशतकं
हरेत्सौम्यः शुक्रो द्विगुणमपि लक्षं सुरगुरुः।
भवेदाये केंद्रेऽगप उत लवेशो यदि तदा
समूहं दोषाणां दहन इव तूलं शमयति ॥ ९१ ॥

(अन्वयः) सौम्यः त्रिकोणे केन्द्रे वा मदनरहिते तदा शतकं दोषं हरेत् शुक्रो द्विगुणमपि दोषं हरेत्-सुरगुरुः लक्षं दोषं हरेत् अङ्गपः आये केन्द्रे भवेत् उत लवेशः यदि आये केन्द्रे भवेत्तदा दोषाणां समूहं शमयति क इव दहन स्तूलमिव ॥ ९१ ॥

अर्थः-प्रथम चौथे पाँचवें नवमें दशवें स्थानों में बुध हो तो १०० सौ दोषों को नाश करता है और उक्त स्थानों में शुक्र हो तो दो सौ २०० दोषों को हरता है। यदि बृहस्पति होवे तो १००००० एक लक्ष दोषों को नाश करता है और लग्नका स्वामी अथवा नवमांश का स्वामी ग्यारहवें पहले चौथे दशवें स्थान में हो तो दोषों के समूहों को यथा अग्नि रुईको भस्म करती है उसी प्रकार नाश करे ॥ ९१ ॥

लग्न विंशोपक कथन—

द्वौ द्वौ ज्ञभृग्वोः पंचेंदौ रवौ सार्धत्रयो गुरौ।
रामा मंदांशुकेत्वारे सार्धैकैकं विशोपकाः ॥ ६२ ॥

(अन्वयः) ज्ञभृग्वोः द्वौ द्वौ रवौ पञ्चेन्दौ गुरौ सार्द्धत्रयः मन्दांशुकेत्वारे सार्द्धैकैकं रामाः, विशोपका स्युरिति ॥ ६२ ॥

अर्थः-दो दो विश्वा बुध और शुक्र फल देते है। पाँच विश्वा चद्रमा साढेतीन विश्वा सूर्य और बृहस्पति तीन विश्वा शनिश्चर राहु केतु मंगल यह ग्रह डेढ़ डेढ़ विश्वा फल देते हैं ॥ ६२ ॥

श्वशुर आदि ग्रहोंका विचार—

श्वश्रुः सितोऽर्कः श्वसुरस्तनु तनु
र्जामित्रपः स्याद्दयितो मनः शशी
एतद्बलं संप्रति भाव्यतांत्रिक
स्तेषां सुखं संप्रवदेद्विवाहतः ॥ ६३ ॥

(अन्वयः) सितः श्वश्रूः अर्कः श्वशुरः तनुः तनुः स्यात् जामित्रपः दयिता स्यात् शशी मनः स्यात्-, एतद्बलं एतेषां शुक्रादीनां बलं संप्रति भाव्यविवाहतः तेषां श्वश्वादीनां सुखं प्रवदेदिति ॥ ६३ ॥

अर्थः-शुक्र कन्याकी सासु हैं और सूर्य श्वशुर हैं और लग्न शरीर हैं सप्तम स्वामी पति हैं चन्द्रमा मन हैं अब ज्योतिष वेत्ता इन्हीं ग्रहों से विचार करके विवाह से उनका शुभाशुभ फल कहैं ॥ ६३ ॥

संकीर्ण जातिके विवाह समय का वर्णन—

कृष्णे पक्षे सौरिकुजार्केऽपि च वारे
वर्ज्ये नक्षत्रे यदि वा स्यात्करपीडा।
संकीर्णानांहि सुतायुर्धनलाभ-
प्रीतिप्राप्त्यै सा भवतीह स्थितिरेषा ॥ ६४ ॥

( अन्वयः ) कृष्णे पक्षे सौरिकुजार्केपि वारे च पुनः वर्ज्य नक्षत्रे यदि वा संकीर्णानां करपीडा स्यात् तर्हि सा सुतायुर्धनलाभप्रीतिप्राप्त्यै इह एषा स्थिति र्भवति ॥ इति ॥ ६४ ॥

अर्थः-कृष्णपक्ष शनिश्चर मंगल एतवार और विवाह में वर्जित नक्षत्रों में यदि नीच जातिके विवाहादि हो जावैं तो पुत्र आयु धनलाभ प्रीति को प्राप्त करता है ॥ ६४ ॥

गांधर्व विवाह वर्णन—

गांधर्वादिविवाहेऽर्काद्वेद ४ नेत्र २ गुणे ३ दवः १ ।
कु १ युगां ६ गा ग्नि ३ भू १ रामा ३ स्त्रिपद्यामशुभाः शुभाः ६२

( अन्वयः ) गान्धर्वादि विवाहे अर्कान्नक्षत्रात् वेदनेत्रगुणेऽन्दवः कुयुगाङ्गाग्निभूरामाः त्रिपद्यां शुभाः शुभाः न भवन्तीति ॥ ६५ ॥

अर्थः-गान्धर्वादि विवाहों में सूर्यके नक्षत्रसे चार नक्षत्र अशुभ, पीछे दो न० शुभ तीन न० अशुभ एक न० शुभ फिर एक न० अशुभ चार न० शुभ फिर छः न० अशुभ तीन न० शुभ पीछे एक न० शुभ पीछे तीन न० अशुभ ऐसे तीन पदों में शुभ और अशुभ जानना ॥ ६५ ॥

विवाह के प्रथम कर्तव्यों का विचार—

विधोर्बलमवेक्ष्य वा दलनकंडनं वारकं
गृहांगणविभूषणान्यथ च वेदिकामंडपान् ।
विवाहविहितोडुभिर्विरचयेत्तथोद्वाहतो
न पूर्वमिदमाचरेत्त्रिनवषण्मिते वासरे ॥ ६६ ॥

( अन्वयः ) विधोः बलं अवेक्ष्य वा दलनकण्डनं वारकं गृहाङ्गणविभूषणानि अथ वेदिकामण्डपान् उद्वाहतः विवाहविहितोडुभिः पूर्वं विरचयेत् तथा इदं त्रिनवषण्मिते वासरे न आचरेदिति ॥ ६६ ॥

अर्थः—चन्द्रमा का बल देखकर मंगल कलश अन्नका काड़ना पछोरना पीसना घर आँगन को भूषित करना वेदी मंडप बनाना विवाहके नक्षत्रमें शुभ है, परन्तु विवाह दिन से ३, ६, ९ दिन पहले न होय ॥ ६६ ॥

विवाह में वेदी लक्षण व दिन नियम—

हस्तोच्छ्राया वेदहस्तैः समंतात्तुल्या वेदी सद्मतो वामभागे।
युग्मे घस्ने षष्ठहीने च पंचसप्ताहे स्यान्मंडपोद्वासनं सत् ॥९७॥

(अन्वयः) सद्मतो वामभागे हस्तोच्छ्राया समन्ताद्वेदहस्तैः तुल्या वेदी स्यात् युग्मे घस्ने षष्ठहीने च पञ्चसप्ताहे मण्डपोद्वासनं सत् स्यात् ॥ ९७ ॥

अर्थः-मकान के बाँये तरफ चार हाथ चोखुटी और एक हाथ ऊंची वेदी बनाना। छठे दिनको छोड़कर समदिनमें और पाँचवें और सांतवें दिनमें मंडप का विसर्जन करै।

किसी आचार्यने तेल चढ़ाने की संख्या कही है—

मेषादिराशिजवधूवरयोर्बटोश्च
तैलादिलेपनविधौ कथिताऽत्र संख्या।
शैला दिशः शरदिगत्तनगाद्रिबाणबाणात्तबाणगिरयो
७,१०,५,१५,५,७,७,५,५,५,५,७ विबुधैस्तु कैश्चित् ९८

(अन्वयः) मेषादिराशिजवधूवरयोः वटोश्च तैलादिलेपनविधौ कैश्चित् विबुधैः शैला दिशः शरदिगत्तनगाद्रिबाणबाणात्तबाणगिरय इति संख्या कथिता ९८

अर्थः-मेषादि राशिमें उत्पन्न कन्या, वरोंकी तेल लगाने की संख्या जाननी मेष राशिमें सात, वृषमें दश, मिथुन में पांच, कर्क में दश, सिंहमें पांच, कन्या में सात; तुला में सात, वृश्चिक में पांच, धनमें पांच, मकर में पांच, कुंभमें पांच, मीनमें सात, यह मत कितने ही पंडितों का है ॥ ९८ ॥

विवाह मंडपे स्तंभ विवरणम्—

सूर्येऽङ्गनासिंहघटेषु शैवे स्तंभोऽलिकोदंडमृगेषु वायौ।
मीनाजकुंभे निर्ऋतौ विवाहे स्थाप्योऽग्निकोणे वृषयुग्मकर्के ॥९९॥

(अन्वयः) अङ्गनासिंहघटेषु सूर्ये शैवे ईशानकोणे अलिकोदण्डमृगेषु सूर्ये वायौ वायव्यकोणे मीनाजकुम्भे सूर्ये निर्ऋतौ वृषयुग्मकर्के अग्निकोणे विवाहे स्तम्भः स्थाप्य इति ॥ ९९ ॥

अर्थः-कन्या सिंह तुला के सूर्य में ईशानकोण (पूर्व उत्तर के मध्य) में विवाह स्तंभ को स्थापन करें। वृश्चिक धन मकर इन राशि के सूर्य होने से

वायु कोण में स्तंभ को स्थापन करना शुभ है। मीन मेष कुंभ के सूर्य में नैर्ऋत्य कोणमें स्तंभ स्थापित करै। वृष मिथुन कर्क राशि के सूर्य में अग्निकोणमें स्तंभ स्थापन करै तो अतीव शुभ है॥ ९९॥

गोधूलि प्रशंसा-

नास्यामृक्षं न तिथिकरणं नैव लग्नस्य चिंता
नो वा वारो न च लवविधिर्नो मुहूर्तस्य चर्चा।
नो वा योगो न मृतिभवनं नैव जामित्रदोषो
गोधूलिः सा मुनिभिरुदिता सर्वकार्येषु शस्ता॥१००॥

(अन्वयः) अस्यां ऋक्षं न तिथिकरणं नैव लग्नस्य चिन्ता नो वा वारः नच लवविधिः नो मुहूर्तस्य चर्चा नो वा योगः न मृतिभवनं नैव जामित्रदोषः सा गोधूलिः सर्वकार्येषु मुनिभिः शस्ता उदिता इति॥ १००॥

अर्थः-जिस मूहूर्त्त में नक्षत्र तिथि, करण, लग्न, वार, मुहूर्त्त योग आठवें स्थान का दोष, जामित्रदोष, यह कुछ भी न बनते हों और मुहूर्त्त भी न होय तो भी श्रेष्ठ मुनियों ने गोधूलि लग्नको सम्पूर्ण कार्य में श्रेष्ठ कहा है॥ १००॥

गोधूलि के भेद—

पिंडीभूते दिनकृति हेमंततौं स्यादर्धास्ते तपसमये गोधूलिः।
संपूर्णास्ते जलधरमालाकाले त्रेधा योज्या सकलशुभे कार्यादौ॥

(अन्वयः) हेमन्तर्तौ दिनकृति सूर्ये पिण्डीभूते सति गोधूलिः स्यात् तपससय अर्द्धास्ते सति गोधूलिः स्यात् जलधरमालाकाले सम्पूर्णास्ते गोधूलिर्ज्ञेया सकलशुभे कार्यादौ त्रेधा योज्या॥ १०१॥

अर्थः—मार्गशीर्ष (अगहन) पौष माघ फाल्गुन इन महीनों में पिंडीभूत (गोल सूर्य) हो तो गोधूली लग्न जानना। चैत्र वैशाख ज्येष्ठ आषाढ़ इन महीनों में सूर्य आधा अस्त होवें तो गोधूलि लग्न जानना। श्रावण भादों कुआर कार्तिक में अस्त के बाद गोधूलि जानना यह गोधूलि लग्न जानने का क्रम है॥ १०१॥

गोधूलि समय में वर्ज्य दोष—

अस्तं याते गुरुदिवसे सौरे सार्के

लग्नान्मृत्यौ रिपुभवने लग्ने चेंदौ ।
कन्यानाशस्तनुमदमृत्युस्थे भौमे
वोढुर्लाभे धनसहजे चन्द्रे सौख्यम् ॥ १०२ ॥

( अन्वयः ) गुरुदिवसे अर्के अस्तं याते सति गोधूलिः शुभा स्यात् सौरे सार्के गोधूलिः शुभा, लग्नात् मृतौ रिपुभवने च पुनः लग्ने इन्दौ सति कन्यानाशः स्यात् तनुमदनमृत्युस्थे भौमे सति वोढुर्नाशः स्यात् चन्द्रे सति सौख्यं स्यादिति ॥ १०२ ॥

अर्थः-बृहस्पति को सूर्य अस्त में गोधूलि लग्न और शनिवार को सूर्य देखते गोधूलि लग्न शुभ है । गोधूलि लग्न से आठवें छठे, लग्न में चन्द्रमा होय तो कन्या का नाश कहना और गोधूलि लग्न में या सातवें आठवें स्थान में मंगल हो तो वर का नाश होवै, दूसरे तीसरे ग्यारहवें स्थान में चन्द्रमा हो तो सुख होता है ॥ १०२ ॥

सूर्यकी स्पष्ट गतिका विचार—

मेषादिगेऽर्केऽष्टशरा ५८ नगाक्षाः ५७
सप्तेषवः ५७ सप्तशरा ५७ गजाक्षाः ५८ ।
गोक्षाः ५९ खतर्काः ६० कुरसाः ६१ कुतर्काः ६१
क्वंगानि ६१ षष्टि ६० र्नवपंच ५९ भुक्तिः ॥१०३॥

( अन्वयः ) मेषादिगे अर्के सति अष्टशरा नागाक्षाः सप्तेषवः सप्तशरा गजाक्षाः गोक्षाः खतर्काः कुरसाः कुतर्काः क्वङ्गानि षष्टिः नवपञ्च भुक्तिः स्यादिति ॥ १०३ ॥

अर्थः-मेषादि बारह राशियों की स्थूलरूप सूर्य की गति यह है । मे० रा० सूर्य की ५८ गति वृ० रा० सूर्य की ५७ ग०, मि० रा० सू० ५७ ग० क० रा० सूर्य की ५८ ग० सिं० रा० सूर्य की गति ५८, कन्याराशि सूर्य की गति ५९, तु० रा० सूर्य की गति ६०, वृश्चिक रा० सूर्य की गति ६१, ध० रा० सूर्य की गति ६१, म० रा० सूर्य की गति ६१, कुं० रा० सूर्य की गति ६० और मीन राशि के सूर्य की गति ५९ है, यह कलात्मक गति कही जाती है ॥ १०३ ॥

तत्काल सूर्य स्पष्ट कथन—

संक्रांतियातभस्राद्यैर्गतिर्निघ्नी खषट् ६० हृता।
लब्धेनांशादिना योज्यं यातर्क्षं स्पष्टभास्करः ॥१०४॥

( अन्वयः ) गतिः संक्रांतियातवस्राद्यैर्निघ्नी खषट् हृता लब्धेन अंशादिना योज्यं यातर्क्षं स्पष्टभास्करो भवतीति ॥ १०४ ॥

अर्थः—जो सूर्य की संक्रान्ति के बीते हुए दिन हैं उनको सूर्य को संक्रान्ति की गति से गुणा करै और उसी संख्या में ६० साठ का भाग देवै जो बचे उसे अंश आदिक जाने फिर सूर्य की बीती हुई राशि जोड़ देने से सूर्य स्पष्ट हो जाते हैं ॥ १०४ ॥

इष्ट लग्न के अंशादि बनाने का क्रम—

तनोरिष्टांशकात्पूर्वं नवांशा दशसंगुणाः।
रमाप्ता लब्धमंशाद्यं तनोर्वर्गादिसाधने ॥ १०५ ॥

( अन्वयः ) तनोर्वर्गादिसाधने तनोरिष्टांशकात् पूर्वं नवांशाः दशगुणाः रामाप्ता लब्धं अंशाद्यं स्यादिति ॥ १०५ ॥

अर्थः—लग्न के नवमांश की बीती हुई संख्याको दशसे गुणा करके तीन का भाग देवै जो कुछ लब्ध हो वह लग्न का अंश कला विकला जानै उतने अंश पर षड्वर्ग का साधन करै ॥ १०५ ॥

इष्ट घड़ी बनाने की विधि—

अर्काल्लग्नात्सायनाद्भोग्ययुक्तै
र्भागैर्निघ्नात्स्वोदयात्खाग्निभक्तात्।
भोग्यं भुक्तं चान्तरालोदयाढ्यं
षष्ट्या भक्तं स्वेष्टनाड्यो भवेयुः ॥ १०६ ॥

( अन्वयः ) सायनादर्कात्लग्नात् भोग्यभुक्तैर्भागैर्निघ्नात् स्वोदयात् खाग्नि-भक्तात् लब्धं भोग्यं भुक्तं च स्यात् तदन्तरालोदयाढ्यं षष्ट्या भक्तं तदा स्वेष्टना-ड्योभवेयुरिति ॥ १०६ ॥

अर्थः-उदय मान से सायन सूर्य के भोग्य अंशों को गुणा करै, तिस पीछे सायन लग्न भुक्त अंशो को सायन लग्न के राशि के उदयमान से गुणा करै, दोनों में ३० से भाग दे जो भोग्यकाल और भुक्तकाल आवे उन दोनों को जोड़ कर उसमें सायन सूर्य से सायन लग्न तक के उदयमानों को मिला दे पुनः ६० साठ से भाग दे वही इष्टकाल हो जाता है ॥ १०६ ॥

घटी लाने का दूसरा प्रकार-

चेल्लग्नार्कौ सायनावेकराशौ तद्विश्लेषघ्नोदयःखाग्निभक्तः।
स्वेष्टः कालो लग्नमूनं यदार्का-
द्रात्रेः शेषोऽर्कात्सषड्भान्निशायाम् ॥ १०७ ॥

( अन्वयः ) चेद्यदि सायनौ लग्नार्कौ एकराशौ स्यातम् तद्विश्लेषघ्नोदयः खाग्निभक्तस्तदा स्वेष्टः कालः स्यात् यदार्काल्लग्नात् लग्नभूतं तदा रात्रिशेषे इष्टकालो भवेत् निशायां रात्रौ अर्कात्सषड्भं तदा इष्टकालो भवतीति ॥ १०७ ॥

अर्थः-सायन सूर्य और सायन लग्न अगर एकही राशि के हों तो उनका अन्तर करके अन्तरांश को उदयमान से गुणा कर ३० का भाग देने से इष्टकाल हो जाता है। सायनसूर्य से सायनलग्न कम हो तो वह रात्रि शेष का इष्टकाल हो जाता है। यदि रात्रि समय की लग्न होवे तो राशि सायन सूर्य में जोड़ कर क्रिया करनी चाहिये ॥ १०७ ॥

विवाह आदि शुभकार्य में विशेष वर्ज्य-

उत्पातान्सहपातदग्धतिथिभिर्दुष्टांश्च योगांस्तथा
चंद्रेज्योशनसामथास्तमयनं तिथ्याः क्षयर्द्धी तथा।
गण्डांतं च सविष्टिसंक्रमदिनं तन्वंशपास्तं तथा
तन्वंशेशविधूनथाष्टरिपुगान् पापस्य वर्गास्तथा ॥१०८॥
सेन्दुक्रूरखगोपयांशमुदयास्तांशुद्धिचंडायुधान्
खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम्।
बाणोपग्रहपापकर्तरि तथा तिथ्यृक्षवारोत्थितं

दुष्टं योगमथार्धयामकुलिकाद्यान्वारदोषानपि ॥१०६॥
क्रूराक्रांतविमुक्तभं ग्रहणभं यत्क्रूरगंतव्यभं
त्रेधोत्पातहतं च केतुहतभं सन्ध्योदितं भं तथा ।
तद्वच्च ग्रहभिन्नयुद्धगतभं सर्वानिमान्सन्त्यजे-
दुद्वाहे शुभकर्मसु ग्रहकृतान् लग्नस्य दोषानपि ॥११०॥
इति मुहूर्तचिंतामणौ विवाहप्रकरणम् ॥ ६ ॥

( अन्वयः ) उद्वाहे शुभकर्मसु उत्पातान् सह पातदग्धतिथिभिः च पुनः दुष्टान् योगान् तथा चन्द्रेज्योशनसा अथ अस्तमयनं तथा तिथ्याः क्षपर्द्धी गण्डान्तं ( च ) सत्रिप्टिसंक्रमदिनं तथा तन्वंशयास्तं तन्वंशेशविधून् अथाष्टरिपुगान् पापस्य वर्गान् तथा सेन्दुक्रूरखगोदयांशमुदयास्ताशुद्धिचण्डायुधान् खार्जूरं दशयोगयोगसहितं जामित्रलत्ताव्यधम् वाणोपग्रहपापकर्तरि तथा तिथ्यृक्षयोगोत्थितं दुष्टयोगं अथार्द्धयामकुलिकाद्यान् वारदोषान् अपि क्रूराक्रान्तविमुक्तभं ग्रहणभं क्रूरगन्तव्यभं यत्त्रेधोत्पातहतं ( च ) केतुहतभं तथा सन्ध्योदितं भं तद्वच्च ग्रहभिन्नयुद्धगतभं ग्रहकृतान् लग्नस्य दोषान् अपि इमान्सर्वान् त्यजेदिति ॥ १०८-१०९-११० ॥

अर्थः—उत्पात योग, महापात योग, दग्धतिथि, दुष्ट योग, चन्द्र बृहस्पति शुक्र का अस्तोदय तीनों प्रकार के गण्डान्त, वृद्धि और न्यून तिथि, भाद्र संक्रांति दिन, लग्न स्वामी और नवमांश के स्वामी का अस्त, लग्न स्वामी और चन्द्र का आठवें छठे स्थान में या पापग्रह के षट्वर्ग चन्द्रमा या पापग्रहों से युक्त लग्न या नवमांश, उदयास्त शुद्धि चन्द्रायुध, खार्जूर दोषदश योग दोष, जामित्र दोष लत्ता दोष, वेध बाण पंचक, उपग्रहदोष कर्त्तरी दोष, वार तिथि नक्षत्र से उत्पन्न दोष, दुष्टयोग, वार वेला दोष, कुलिक इत्यादि वार दोष क्रूर ग्रह से युक्त त्यक्त नक्षत्र सूर्यचन्द्र के ग्रहण नक्षत्र और जिस नक्षत्र पर क्रूर ग्रह जाने वाला होय सो नक्षत्र तीनों उत्पात से हत नक्षत्र, केतु से हत नक्षत्र सूर्य के अस्त समय का नक्षत्र, सूर्य के नक्षत्र से चौदहवाँ नक्षत्र, ग्रह भिन्न नक्षत्र और युद्ध नक्षत्र जितने लग्न सम्बन्धी दोष है इन सबको

यज्ञोपवीत विवाहादि सम्पूर्ण शुभ कर्म में भलीभांति त्याग करे यह शुभप्रद नहीं है ॥ १०८-१०९-११० ॥

इति मुहूर्तचिन्तामणौ भाषाटीकायां विवाह प्रकरणम् षष्ठम् ॥ ६ ॥



# वधूप्रवेशप्रकरणम् ७।



पतिके घरमें वधूका नूतन प्रवेश--

समाद्रिपंचांकदिने विवाहाद्वधूप्रवेशोऽष्टिदिनांतराले।
शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेष्टम् ॥१॥

( अन्वयः ) विवाहात्सकाशात् अष्टिदिनान्तराले समाद्रिपञ्चांकदिने वधूप्रवेशः शुभः स्यात् परस्तात् ( प्रतिबन्धवशात् ) विषमाब्दमासदिने अक्षवर्षात्परतः यथा इष्टं तथा कार्यमिति ॥ १ ॥

अर्थः—विवाह दिन से सोलह १६ दिन के भीतर नव सात पाँच दिन में वधूप्रवेश शुभ है यदि किसी कारण से सोलह दिन के भीतर वधूप्रवेश न हो तो विषम वर्ष विषम मास विषम दिन में वधूप्रवेश करना और पाँच वर्ष के बाद निज इच्छा से वधूप्रवेश करे फिर विषम वर्ष का नियम नहीं है ॥ १ ॥

वधूप्रवेश में नक्षत्रशुद्धि—

ध्रुवक्षिप्रमृदुश्रोत्रेवसुमूलमघानिले।
वधूप्रवेशः सन्नेष्टो रिक्ताराके बुधे परैः ॥ २ ॥

( अन्वयः ) ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले वधूप्रवेशः सत् स्यात् रिक्ताराकें बुधे परैः आचार्यैर्वधूप्रवेशो न शस्त इति ॥ २ ॥

अर्थः-ध्रुवसंज्ञक ( तीनों उत्तरा रोहिणी ) क्षिप्रसंज्ञक (अश्विनी पुष्य हस्तअभिजित) मृदुसंज्ञक (चित्रा अनुराधा रेवती मृगशिरा) नक्षत्र और श्रवण

धनिष्ठा मूल मघा स्वाती नक्षत्रों में वधूप्रवेश करना शुभ है (४-६-१४) तिथि मंगलवार रविवार में बधूप्रवेश अशुभ हैं किसी के मत से बुधवार भी अशुभ है ॥ २ ॥

विवाह हुए वरस में स्त्री के घर में रहने का विचार-

ज्येष्ठे पतिज्येष्ठमथाधिके पतिं हन्यादिमे भर्तृगृहे वधूः शुचौ ।
श्वश्रूं सहस्ये श्वशुरं क्षये तनुं तातं मधौ तातगृहे विवाहतः॥३॥

इति मुहूर्तचिंतामणौ वधूप्रवेशप्रकरणम् ॥ ७ ॥

( अन्वयः ) विवाहतः सकाशाद् भर्तृगृहे स्थिता वधूः यदि आदिमे प्रथमे ज्येष्ठे मासि तदा पतिज्येष्ठं हन्यात् अथाधिके अधिकमासे पतिं हन्यात् शुचौ श्वश्रूं सहस्ये श्वशुरं क्षये तनुं मधौ चैत्रे मासे तातगृहे तिष्ठन्ती वधूः तातं हन्तीति ॥ ३ ॥

अर्थः—ज्येष्ठ मास में पति गृह स्थित वधू पतिके ज्येष्ठ को नाश करती हैं अधिक मास ( मलमास) में पति को और आषाढ़ में सास को हनन करती है पौष में श्वशुर को और क्षयमास में निज शरीर ही का नाश करती है यदि विवाह होजाने के पीछे वधू चैत्र मास में निज पिता ही के घर रह जाय तो पिता ही को नाश करती है ॥ ३ ॥

इति मुहूर्तचिन्तामणौ भाषाटीकायां सप्तमं बधूप्रवेशप्रकरणम् समाप्तम् ॥ ७ ॥



# द्विरागमनप्रकरणम् ८ ।



द्विरागमन का मुहूर्त-

चरेदथौजहायने घटालिमेषगे रवौ
रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे
नृयुग्ममीनकन्यकातुलावृषे विलग्नके
द्विरागमं लघुध्रुवे चरेऽस्वपे मृदूडुनि ॥ १ ॥

(अन्वयः) अथ ओजहायने रवौ घटालिमेषगे सति रवीज्यशुद्धियोगतः शुभग्रहस्य वासरे नृयुग्ममीनकन्यकातुलावृषे विलग्नके सति लघुध्रुवे चरे अस्रप मृदूडुनि पपु भेषु द्विरागमं चरेत् इति ॥ १ ॥

अर्थः-विषम ( १, ३, ५ ) वर्षों में कुम्भ वृश्चिक मेष राशि के सूर्य में बृहस्पति सूर्य शुद्ध हो तो बुध और बृहस्पति शुक्र चन्द्रवार में मिथुन मीन कन्या तुला वृष लग्नों में लघु संज्ञक ( अश्विनी पुष्य हस्त अभिजित ) ध्रुव ( तीनों उत्तरा रोहिणी ) चर ( श्रवण धनिष्ठा शतभिषा पुनर्वसु स्वाती ) मूल मृदु ( मृगशिरा रेवती चित्रा अनुराधा ) इन नक्षत्रों में द्विरागमन शुभ है ॥ १ ॥

सन्मुख शुक्रदोष विचारः-

दैत्येज्यो ह्यभिमुखदक्षिणे यदि स्या
द्गच्छेयुर्न शिशुगर्भिणी नवोढाः ।
बालश्चेद्व्रजति विपद्यते नवोढा
वन्ध्या चेद् भवति च गर्भिणी स्वगर्भा ॥ २ ॥

(अन्वयः) यदि दैत्येज्यः शुक्रोऽभिमुखदक्षिणे तदा शिशुगर्भिणीनवोढाः हि निश्चयेन न गच्छेयुः चेद्बालो व्रजति तदा विपद्यते नवोढा व्रजति तदा वन्ध्या भवति गर्भिणी चेद् व्रजति स्वगर्भा भवतीति ॥ २ ॥

अर्थः-द्विरागमन में यदि शुक्र सन्मुख अथवा दाहिने तरफ हो तो बालक, गर्भिणी नवीन ब्याही स्त्री ये यात्रा न करें बालक चले तो मृत्युको प्राप्त होय गर्भिणीका गर्भनाश होय और नवोढ़ा चले तो वंध्या होवे ॥ २ ॥

शुक्रदोषका परिहार-

नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः ।
नृपपीडने नववधूप्रवेशने प्रतिभार्गवो भवति दोषकृन्नहि ॥३॥

(अन्वयः) नगरप्रवेशविषयाद्युपद्रवे करपीडने विबुधतीर्थयात्रयोः नृपपीडने नववधूप्रवेशने हि निश्चयेन प्रतिभार्गवः दोषकृन् न भवति ॥ ३ ॥

अर्थः-नगरप्रवेश, ग्राम के उपद्रव, विवाह निमित्त यात्रा, देवता तीर्थ की यात्रा, राजा से पीड़ा होने पर, अन्य देश की यात्रा नवीन वधू प्रवेशमें सन्मुख शुक्र का दोष नहीं ॥ ३ ॥

तथा द्वितीय परिहार—

पित्र्ये गृहे चेत्कुचपुष्पसंभवः स्त्रीणां न दोषः प्रतिशुक्रसंभवः।
भृग्वंगिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा ॥४॥

इति मुहूर्तचिंतामणौ द्विरागमनप्रकरणम् ॥ ८ ॥

( अन्वयः ) पित्र्ये गृहे चेत्कुचपुष्पसम्भवः स्यात् तदा स्त्रीणां प्रतिशुक्रसम्भवः दोषो नास्ति भृग्वङ्गिरोवत्सवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले यथा स्यात्तथा दोषो नास्ति ॥ ४ ॥

अर्थः-यदि पिता के गृह में स्त्री के कुच और रजादर्शन हो जावे तो सन्मुख शुक्रका दोष नहीं है तथा भृगु, अंगिरा, वत्स, वसिष्ठ, कश्यप, अत्रि, भरद्वाज, इन ऋषियों के कुलकी स्त्रियोंको शुक्र सन्मुखका दोष नहीं हैं ॥ ४ ॥

इति मुहूर्तचिंतामणौ भाषाटीकायां द्विरागमनप्रकरणमष्टमम् ॥ ८ ॥



# अग्न्याध्यानप्रकरणम् ९।



प्रथम अग्निके आधान में मुहूर्त-

स्यादग्निहोत्रविधिरुत्तरगे दिनेशे
मिश्रध्रुवान्त्यशशिशक्रसुरेज्यधिष्ण्ये।
रिक्तासु नो शशिकुजेज्यभृगौ न नीचे
नास्तंगते न विजिते न च शत्रुगेहे ॥ १ ॥

(अन्वयः) दिनेशे सूर्ये उत्तरगे, मिश्रध्रुवान्त्यशशिशक्रसुरेज्यधिष्ण्ये रिक्तासु, नो शशिकुजेज्यभृगौ न नीचे न अस्तंगते न विजिते शत्रुगृहे च न तदा अग्निहोत्रविधिः स्यात् ॥ १ ॥

अर्थः-उत्तरायण सूर्य कृतिका विशाखा तीनों उत्तरा रोहिणी रेवती मृगशिरा ज्येष्ठ पुष्य नक्षत्रों में रिक्ता (४।९।१४) यह तिथि न हो चन्द्रमा मंगल बृहस्पति शुक्र इन चारों ग्रहों में से कोई ग्रह नीच की राशि में न हो और अस्त न हो शत्रुक्षेत्रीभी न हो और ग्रहयुद्ध में हारा हुआ न हो तो अग्न्याधान प्रारंभ करना शुभ है ॥ १ ॥

अग्न्याधान में लग्नशुद्धि-

नो कर्कनक्रझषकुम्भनवांशलग्ने
नोऽब्जे तनौ रविशशीज्यकुजे त्रिकोणे।
केन्द्रद्यूनषट्त्रिभगवे च परस्त्रिलाभ
षट्खस्थितैर्निधनशुद्धियुते विलग्ने ॥ २ ॥

(अन्वयः) कर्कनक्रझषकुम्भनवांशलग्ने नो अब्जे चन्द्रे तनौ सति नो रविशशीज्यकुजे त्रिकोणे केन्द्रद्यूनषड्भवनगे च परैः ग्रहैः त्रिलाभषट्खसंस्थितैः निधनशुद्धियुते विलग्ने सति तदाऽग्निहोत्रविधिः कुर्यादिति ॥ २ ॥

अर्थः-कर्क मकर मीन कुम्भ इनमें से कोई लग्न न होवै इनका नवमांश भी न होवै चन्द्रमा लग्न में स्थित न हो तो अग्न्याधान कर्म करना चाहिये । रवि चन्द्र मंगल गुरु ये ग्रह ३।५ होवें अथवा १।४।७।१०।६।३।११ में होवें शनि राहु केतु शुक्र बुध तीसरे ग्यारहवें छठे दशवें स्थित होवें और अष्टम स्थान ग्रह से शून्य होवें तो अग्न्याधान कर्म शुभ है ॥ २ ॥

यज्ञ में लग्नशुद्धि-

चापे जीवे तनुस्थे वा मेषे भौमेऽम्बरे द्युने ।
षट्त्र्यायेऽब्जे रवौ वा स्याज्जाताग्निर्यजति ध्रुवम् ॥३॥
इति मुहूर्तचिंतामणौ अग्न्याधानप्रकरणम् ॥९॥

(अन्वयः) जीवे चापे वा तनुस्थे भौमे मेषे सति अथवा भौमे अम्बरे द्युने अब्जे चन्द्रे षट्त्र्याये, वा रवौ षट्त्र्याये तदा जाताग्निः अग्निहोत्रकर्ता स्यात् ध्रुवं निश्चयेन ॥ ३ ॥

अर्थः-लग्न में धनराशि की बृहस्पति हो अथवा मेषराशि का मंगल लग्न में अथवा दशवें वा सातवें स्थित होवै छठे आठवें ग्यारहवें स्थान में चन्द्रमा वा मंगल हो ऐसे लग्न में अग्निहोत्र का प्रारम्भ करना शुभ है ॥ ३ ॥

इति मुहूर्तचिंतामणौ भाषाटीकायां अग्न्याधानप्रकरणं नवमम् ॥ ९ ॥



# राजाभिषेकप्रकरणम् १० ।

राजाभिषेक में कालशुद्धि—

**राजाभिषेकः शुभ उत्तरायणे गुर्विन्दुशुक्रैरुदितर्बलान्वितैः ।**
**भौमार्कलग्नेशदशेशजन्मपैर्नो चैत्ररिक्तारनिशामलिम्लुचे ॥१॥**

( अन्वयः ) उत्तरायणे गुर्विन्दुशुक्रैः, उदितैः भौमार्कलग्नेशदशेशजन्मपैः बलान्वितैः चैत्ररिक्तारनिशामलिम्लुचे नो तदा राजाभिषेकः शुभः स्यादिति ॥१॥

अर्थः-उत्तरायण सूर्य में बृहस्पति चन्द्रमा शुक्र ये ग्रह उदित होवें और मंगल सूर्य लग्नेश जन्मकालिक महादशा अन्तर्दशा के स्वामी जन्मराशी ये बलयुक्त उच्चके अथवा निज स्थान में स्थित हों तो राज्याभिषेक शुभ है । चैत्र-मास रिक्ता तिथि मंगलवार रात्रि और अधिकमास को छोड़ कर ॥ १ ॥

नक्षत्र और लग्नशुद्धि—

**शाक्रश्रवःक्षिप्रमृदुध्रुवोडुभिः शीर्षोदये वोपचये शुभे तनौ ।**
**पापैस्त्रिषष्ठायगतैः शुभग्रहैः केन्द्रत्रिकोणायधनत्रिसंस्थितैः॥२॥**

( अन्वयः ) शाक्रश्रवः क्षिप्रमृदुध्रुवोडुभिः शीर्षोदये वाऽपचये शुभे तनौ पापैः त्रिषष्ठायगैः शुभग्रहैः केन्द्रत्रिकोणायधनत्रिसंस्थैः तदा राजाभिषेकः शुभो भवतीति ॥ २ ॥

अर्थ -ज्येष्ठा श्रवण अश्विनी पुष्य हस्त अभिजित् चित्रा मृगशिरा रेवती अनुराधा रोहिणी तीनों उत्तरा इन नक्षत्रों में राज्याभिषेक शुभ है । मिथुन सिंह कन्या तुला वृश्चिक कुम्भ यह लग्न होवें वा जन्म लग्न से व जन्म राशि से तीसरी छठी ग्यारहवीं दशवीं कोई लग्न होवें और शुभग्रह लग्न में होवें अथवा शुभ ग्रह की दृष्टि हो तो राज्याभिषेक शुभ है । पापग्रह तीसरे छठे ग्यारहवें स्थित होवें और शुभ ग्रह १।४।७।१०।५।६।२।३।११ इन स्थानों में स्थित होवें तो राज्याभिषेक शुभ है ॥ २ ॥

स्थान विशेषसे ग्रहोंका फल—

**पापैस्तनौ रुङ्निधने मृतिः सुते पुत्रार्तिरर्थव्ययगैर्दरिद्रता ।**

स्यात्खेऽलसो भ्रष्टपदो धनांबुगैः सर्वं शुभं केंद्रगतैः शुभग्रहैः॥३॥

( अन्वयः ) पापैः पापग्रहैस्तनौ तदा रुक्स्यात् निधने सति मृतिः स्यात् सुते पुत्रार्तिः स्यात् अर्थव्ययगै र्दरिद्रता स्यात् खे अलसः, धुनाम्बुगैः भ्रष्टपदो भवति शुभग्रहैः केन्द्रगतैः सर्वं शुभं भवति ॥ ३ ॥

अर्थः—लग्न में पापग्रह हों तो राजा को रोग हो, आठवें स्थान में पापग्रह होवें तो मृत्यु होय, पाँचवें स्थान में पापग्रह होवें तो पुत्र पीड़ा, दूसरे और बारहवें स्थान में पापग्रह होवें तो दरिद्रता होय दशवें पापग्रह होने से उद्योग रहित होवै 'सातवें' चौथे पापग्रह होवें तो ऐश्वर्य भ्रष्ट हो जाय । यदि शुभ ग्रहकेन्द्र में हों तो सम्पूर्ण दोष शुभ हो जाते हैं ॥ ३ ॥

स्थिर सम्पत्ति योग—

गुरुर्लग्नकोणे कुजोऽरौ सितः खे स राजा सदा मोदते राजलक्ष्म्या।
तृतीयायगौ सौरिसूर्यौ खबंध्वोर्गुरुश्चेद्धरित्री स्थिरा स्यान्नृपस्य॥४॥
इति मुहूर्तचिंतामणौ राजाभिषेकप्रकरणम् ॥१०॥

( अन्वयः ) गुरुः लग्नकोणे कुजः अरौ शत्रुगृहे सितः खे सति तदा राजा राजलक्ष्म्या मोदते सौरिसूर्यौ तृतीयायगौ चेद्गुरुः खबन्ध्वोः तदा नृपस्य धरित्री स्थिरा स्यात् ॥ ४ ॥

अर्थ.—लग्न में और नवें पाँचवें बृहस्पति होवें और मंगल छठे स्थान में हों, दशम स्थान में शुक्र हों तो राज्याभिषेक किया हुआ राजा सदा राजलक्ष्मी से आनन्द करता है । शनैश्चर तीसरे, सूर्य ग्यारहवें, बृहस्पति दशवें और चौथे होवें ऐसे योग में राज्याभिषेक हो तो राजाकी पृथ्वी सदैव स्थिर रहे ॥ ४ ॥

इति मुहूर्तचिंतामणौ भाषाटीकायां राजाभिषेकप्रकरणं दशमम् ॥ १० ॥



# यात्राप्रकरणम् ११ ।

यात्रा के अधिकारी-

यात्रायां प्रविदितजन्मनां नृपाणां
दातव्यं दिवसमबुद्धजन्मनां च ।
प्रश्नाद्यैरुदयनिमित्तमूलभूतै
र्विज्ञाते ह्यशुभशुभे बुधः प्रदद्यात् ॥१॥

( अन्वयः ) प्रविदितजन्मनां नृपाणां अबुद्धजन्मनां च यात्रायां दिवसं दातव्यम् अशुभशुभे विज्ञाते सति उदयनिमित्तमूलभूतैः प्रश्नाद्यैर्बुधः दिवसं प्रदद्यात् इति ॥ १ ॥

अर्थः-जिन राजाओं के जन्मकाल का ग्रह जानै उनको शुभ दिन बलाबल देख कर और जिनका जन्मकाल का ग्रह न जानै उनको प्रश्न लग्न से शुभाशुभ जानकर यात्रा का मुहूर्त बतावै ॥ १ ॥

प्रश्न लग्न विचार-

जननराशितनू यदि लग्नगे तदधिपौ यदि वा तत एव वा ।
त्रिरिपुखायगृहं यदिवोदयो विजय एव भवेद्वसुधापतेः ॥२॥

( अन्वयः ) यदि जननराशितनू लग्नगे तदा वसुधापतेः विजय एव स्यात् यदि वा तदधिपौ लग्नगतौ स्यातां तदापि वसुधापते विजयः स्यात् अथवा तत एव जन्मलग्नजन्मराशिभ्यामेव वसुधापतेः विजय एव भवेदिति ॥ २ ॥

अर्थः-जन्मलग्न जन्मराशि यदि प्रश्न लग्न में हो अथवा जन्मराशि और जन्मलग्न के पति प्रश्न लग्न में होवें अथवा जन्मलग्न जन्मराशि से तीसरा छठा दशवां ग्यारहवां स्थान का लग्न हो तो यात्रा राजा की जय करै ॥ २ ॥

तथा अन्य प्रश्न लग्नफलम्--

रिपुजन्मलग्नभमथाधिपौ तयोस्तत एव वोपचयसद्म चेद्भवेत् ।
हिबुकेद्युनेऽथ शुभवर्गकस्तनौ यदि मस्तकोदयगृहं तदा जयः३

यदि पृच्छितनौ वसुधा रुचिरा शुभवस्तुयदि श्रुतिदर्शनगम् ।
यदि पृच्छति चादरतश्च शुभग्रहदृष्टयुतं चरलग्नमपि ॥४॥

( अन्वयः ) प्रश्नलग्नात् रिपुजन्मलग्नभं हिबुके द्युने तदा राज्ञो विजयो भवेत् अथवा तयोरधिपौ प्रश्नलग्नात् हिबुके वा द्युने तदापि विजय एव वा तत एव रिपुजन्मलग्नराशिभ्यामेव उपचयसंज्ञःप्रश्नलग्नात् हिबुके वा द्युने चेज्जयो भवेत् अथवा तनौ लग्ने शुभवर्गकः स्यात्तदा एव जयः यदि मस्तकोदयः शीर्षोदय स्तदापि जयः स्यात् ॥ ३ ॥

( अन्वयः ) यदि पृच्छितनौ वसुधा रुचिरा स्यात् वा यदि शुभवस्तु श्रुति-दर्शनगं वा यदि चादरतः पृच्छति शुभ दृष्टयुतं चरलग्नं अपि तदा वसुधापतेः जयः स्यादिति ॥ ४ ॥

अर्थः-यदि शत्रु का जन्म लग्न जन्मराशि और उनके स्वामी प्रश्न लग्न से चौथे सातवें स्थान में हों तो राजा का जय होय । शत्रु के जन्मलग्न, जन्मराशि से तीसरी छठवीं दसवीं ग्यारहवीं लग्न, प्रश्नलग्नसे, चौथे सातवें होय तौ भी जय होय । यदि प्रश्न लग्न में शुभ ग्रहों का षडवर्ग हो तो जय होय अथवा शीर्षोदय राशि प्रश्न लग्न में हो तो राजा का जय होय ॥ ३ ॥ प्रश्न लग्न में सुन्दर भूमि होय अथवा शुभ वस्तु दीखती होय या सुनने में आवे या राजा आदर से पूछें अथवा प्रश्नलग्न चर हो और शुभग्रह की दृष्टि हो तो राजा की अवश्य जय होय ॥ ४ ॥

अशुभ फल देनेवाला प्रश्न-

विधुकुजयुतलग्ने सौरिदृष्टेऽथ चन्द्रे
मृतिभमदनसंस्थे लग्नगे भास्करेऽपि
हिबुकनिधनहोराद्यूनगे वापि पापे
सपदि भवति भंगः प्रश्नकर्तुस्तदानीम् ॥ ५ ॥

( अन्वयः ) विधुकुजयुतलग्ने सौरिदृष्टे तदा प्रश्नकर्तुः भंगो भवति अथ भृतिभवनसंस्थे चन्द्रे भास्करे अपि हिबुकनिधनहोराद्यूनगे तदानीं प्रश्नकर्तु र्नृपस्य सपदि शीघ्रं भंगो भवतीति ॥ ५ ॥

अर्थः-चन्द्र मंगल युक्त लग्न होवें और शनिश्चर की दृष्टि हो तो प्रश्न कर

राजा का नाश पराजय होय। यदि चन्द्रमा आठवें सातव होय रवि लग्न में होवे तो भी पराजय हो अथवा पापग्रह चौथे आठवे सातवें और लग्न स्थानमें यदि स्थित हो तो प्रश्न करनेवाले राजा का विनाश होय ॥ ५ ॥

प्रश्न लग्न विशेष—

त्रिकोणे कुजात्सौरिशुक्रज्ञजीवा
यदैकोपि वा नो गमोऽर्काच्छशी वा।
बलीयांस्तु मध्ये तयोर्यो ग्रहः स्या-
त्स्वकीयां दिशं प्रत्युतासौ नयेच्च ॥ ६ ॥

( अन्वयः ) कुजात् सकाशाद् सौरिशुक्रज्ञजीवाः त्रिकोणे यदा एको वा त्रिकोणे सति गमो गमनं नो वा अर्काच्छशी चन्द्रः त्रिकोणे तत्रापि न गमनं स्यात् तयोर्मध्ये यो ग्रहो बलीयांस्तु पुनः बलवान् स्यात्स्वकीयां दिशं असौ प्रत्युत सांप्रतं ( च ) नयेत् इति ॥ ६ ॥

अर्थः—मंगल से नवें पाँचवें शनि शुक्र बुध बृहस्पति होवै यदि इनमें से कोई भी ग्रह त्रिकोण में होवै तो उस दिशा को गमन न करै और सूर्य चन्द्रमा त्रिकोण में होवै तो भी विचारित दिशा का गमन नहीं होय। इनमें जो ग्रह बलवान् होवै सो अपनी दिशा को उलटा प्राप्त करै ॥ ६ ॥

योगान्तर—

प्रश्ने गम्यदिगीशात्खेटः पञ्चगमो यः।
बोभूयाद्बलयुक्तः स्वामाशां नयतेऽसौ ॥ ७ ॥

( अन्वयः ) गम्यदिगीशात् खेटः प्रश्ने प्रश्नलग्ने बलयुक्तः यः ग्रहः पञ्चमगो बोभूयादसौ स्वां आशां दिशं नयते प्रापयति इति ॥ ७ ॥

अर्थः–जानेवाली दिशाका स्वामी प्रश्नलग्न में जहां पड़ा हो तिससे पाँचवें स्थान में जो ग्रह बलयुक्त होवै तो वह ग्रह अपनी दिशाको प्राप्त करता है ॥७॥

धनुर्मेषसिंहेषु यात्रा प्रशस्ता शनिज्ञोशनोराशिगे चैव मध्या।
रवौ कर्कमीनालिसंस्थेऽतिदीर्घा जनुः पंचसप्तत्रिताराश्च नेष्टाः ॥ ८

( अन्वयः ) रवौ धनुर्मेषसिंहेषु गतेषु यात्रा प्रशस्ता फलदा भवति शनिज्ञो-

शनोराशिगे रवौ ( च ) मध्यमा एव यात्रा मध्यमफलदा स्यात् कर्कमीनालिसंस्थे सति यात्रा अतिदीर्घा स्यात् जनुःपञ्चसप्तत्रिताराश्च नेष्टा भवन्तीति ॥ ८ ॥

अर्थः-धन मेष सिंह राशिके सूर्य में यात्रा अति शुभ है। मकर कुम्भ मिथुन कन्या वृष तुला राशि के सूर्य में यात्रा मध्यम है और कर्क मीन वृश्चिकके सूर्य में ( यात्रा करनेवाला ) बहुत रोज के बाद घर आवै। यात्रा में प्रथम पाँचवाँ सातवाँ तीसरा ये तारा पॅ शुभ नही हैं ॥ ८ ॥

तिथि आदि की शुद्धि-

न षष्ठी न च द्वादशी नाष्टमी नो<br>
सिताद्या तिथिः पूर्णिमाऽमा न रिक्ता।<br>
हयादित्यमित्रेंदुजीवान्त्यहस्त<br>
श्रवोवासवैरेव यात्रा प्रशस्ता ॥ ९ ॥

( अन्वयः ) षष्ठी न द्वादशी च न अष्टमी नो सिताद्या तिथिः पूर्णिमाऽमा च न रिक्ता न हयादित्यमित्रेन्दुजीवान्त्यहस्तश्रवोवासवै. एव नक्षत्रैः यात्रा प्रशस्ता भवतीति ॥ ९ ॥

अर्थः-छठ द्वादशी अष्टमी शुक्लपक्ष की प्रतिपदा पूर्णिमा अमावस्या चौथ चतुर्दशी नवमी इन तिथियों में यात्रा श्रेष्ठ नहीं है। अश्विनी पुनर्वसु अनुराधा मृगशिरा पुष्य रेवती हस्त श्रवण धनिष्ठा इन नव नक्षत्रों में यात्रा श्रेष्ठ है ॥९॥

वारशूल और नक्षत्रशूल-

न पूर्वदिशि शुक्रभे न विधुसौरिवारे तथा<br>
न चाजपदभे गुरौ यमदिशीनदैत्येज्ययोः ।<br>
न पाशिदिशि धातृभे कुजबुधेऽर्यमर्क्षे तथा<br>
न सौम्यककुभि व्रजेत्स्वजयजीवितार्थी बुधः ॥१०॥

( अन्वयः ) शक्रभे न तथा विधुसौरिवारेऽपि पूर्वदिशि न व्रजेत् ( च ) अजपदभे गुरौ गुरुवासरेऽपि यमदिशि न व्रजेत् इनदैत्येज्ययोः धातृभे

पाशिदिशि न व्रजेत् कुजबुधे तथाऽर्यमर्क्षे सौम्यककुभि स्वजयजीवितार्थी बुधे न व्रजेदिति ॥ १० ॥

अर्थः—ज्येष्ठा नक्षत्र और चन्द्रवार शनिवार में पूर्व दिशा को न जाय। पूर्वभाद्रपदा नक्षत्र गुरुवार में दक्षिण की यात्रा न करै। रविवार शुक्रवार और रोहिणी नक्षत्र में पश्चिम दिशा में यात्रा न करै। मंगल बुधवार में और उत्तरा फाल्गुनी नक्षत्र में उत्तर को न जाय ॥ १० ॥

कालशूल—

पूर्वाह्णे ध्रुवमिश्रभैर्न नृपतेर्यात्रा न मध्यान्हके
तीक्ष्णाख्यैरपराह्णके न लघुभैर्नो पूर्वरात्रे तथा।
मित्राख्यैर्न च मध्यरात्रिसमये चोग्रैस्तथा नो चरै
रात्र्यंते हरिहस्तपुष्यशशिभिः स्यात्सर्वकाले शुभा॥११॥

( अन्वयः ) ध्रुवमिश्रभैः नक्षत्रैः पूर्वाह्णे यात्रा न कार्या तीक्ष्णाख्यैः मध्याह्नके यात्रा शुभा न लघुभैः अपराह्णके यात्रा तथा मित्राख्यैश्च पूर्वरात्रे यात्रा न कार्या तथोग्रैश्च मध्यरात्रिसमये यात्रा शुभा न चरैर्नक्षत्रैः रात्र्यन्ते यात्रा न स्यात् हरिहस्तपुष्यशशिभिः सर्वकाले यात्रा शुभा शुभफलदा भवतीति ॥ ११ ॥

अर्थः-तीनों उत्तरा, रोहिणी विशाखा, कृतिका इन नक्षत्रों में पूर्वाह्णकाल में राजाओं को यात्रा करना अशुभ है। मूल ज्येष्ठा आर्द्रा आश्लेषा इन नक्षत्रोंमें मध्याह्न समय में यात्रा करना श्रेष्ठ नहीं होता और हस्त पुष्य अश्विनी अभिजित् इन नक्षत्रों में अपराह्णकाल में यात्रा अशुभ है-मृगशिर रेवती चित्रा अनुराधा इन नक्षत्रों में रात्रि के पूर्वभाग में और तीनों पूर्व भरणी मघा इन नक्षत्रोंमें रात्रि के अन्तभाग में यात्रा करना शुभ नहीं है। श्रवण हस्त पुष्य मृगशिरा इन नक्षत्रों में दिनरात्रि चाहै जिस समय यात्रा करै शुभ है ॥ ११ ॥

नक्षत्रों की वर्ज्य घड़ी—

पूर्वाग्निपित्र्यांतकतारकाणां भूपप्रकृत्युग्रतुरंगमाः स्युः।
स्वातीविशाखेंद्रभुजङ्गमानां नाड्यो निषिद्धामनुसंमिताश्च १२

( अन्वयः ) पूर्वाग्निपित्र्यन्तकतारकाणां भूपप्रकृत्युग्रतुरंगमा स्युः स्वातीविशाखेन्द्रभुजंगमानां तारकाणां मनुसंमिताश्च नाड्यः निषिद्धाः भवन्तीति ॥ १२ ॥

अर्थः-तीनों पूर्वाओं में प्रथम की सोलह घड़ी निषिद्ध हैं कृत्तिका में इक्कीस घड़ी निषिद्ध है। मघा में ग्यारह घड़ी, भरणी में सात घड़ी और स्वाती विशाखा आश्लेषा ज्येष्ठा इन नक्षत्रों में चौदह २ घड़ी निषिद्ध हैं ॥ १२ ॥

तथा वर्ज्यघड़ी—

पूर्वार्धमाग्नेयमघानिलानां त्यजेद्धि चित्राहियमोत्तरार्धम्।
नृपः समस्तां गमने जयार्थी स्वातीं मघां चोशनसो मतेन१३

( अन्वयः ) जयार्थी नृपः गमने यात्रायां चित्राहियमोत्तरार्द्धं हि निश्चयेन त्यजेत् पूर्वार्धमाग्नेयमघानिलानां स्वाती मघाञ्चोशनसः मतेन जयार्थी राजा गमने यात्रायां त्यजेदिति ॥ १३ ॥

अर्थः-कृत्तिका, मघा, स्वाती, नक्षत्रों का पूर्वार्ध और चित्रा, आश्लेषा भरणी, नक्षत्रों का उत्तरार्ध यात्रा में जय की इच्छा करके त्यागना चाहिये। शुक्राचार्य के मत से स्वाती और मघा नक्षत्र समग्रही त्याग देना चाहिये ॥१३॥

नक्षत्रों की जीवपक्षादि संज्ञा—

तमोभुक्तताराः स्मृता विश्वसंख्याः
शुभो जीवपक्षो मृतश्चापि भोग्याः।
तदाक्रांतभं कर्तरीसंज्ञमुक्तं
ततोऽन्येंदुसंख्यं भवेद्ग्रस्तनाम ॥ १४ ॥

( अन्वयः ) तमोभुक्तताराः विश्वसंख्याः भोग्याः स्मृताः जीवपक्षः शुभः, ते विश्वसंख्याः मृतः मृतपक्षश्चापि तदा क्रान्तभं कर्तरीसंज्ञं उक्तं ततोऽसेन्दुसंख्यं ग्रस्तनाम भवेदिति ॥ १४ ॥

अर्थः-राहु के भोगे तेरह नक्षत्रों की जीवपक्ष संज्ञा है सो शुभ है और राहु से आक्रान्त नक्षत्र से भोग्य तेरह नक्षत्र मृतपक्ष संज्ञक है और जिस पर राहु है सो कर्तरी संज्ञक है और पन्द्रहवां ग्रस्त संज्ञक है ॥ १४ ॥

यात्रा शुभाशुभ विचार—

मार्तण्डे मृतपक्षगे हिमकरश्चेज्जीवपक्षे शुभा
यात्रा स्याद्विपरीतगे क्षयकरी द्वौ जीवपक्षे शुभा।

ग्रस्तर्क्षं मृतपक्षतः शुभकरं ग्रस्तात्तथा कर्तरी
यायींदुः स्थितिमान् रविर्जयकरौ तौ द्वौ तयोर्जीवगौ १५

(अन्वय) मार्तण्डे सूर्ये मृतपक्षगे सति हिमकरश्चेज्जीवपक्षे स्यात्तदा यात्रा शुभा शुभफलदा भवति विपरीतगे तदा क्षयकरी स्यात् द्वौ जीवपक्षे स्यातां तदा शुभा भवति मृतपक्षतः ग्रस्तर्क्षं शुभकरं स्यात् इन्दुश्चन्द्रः यायी स्यात् रविः स्थितिमान् भवेत् तौ द्वौ रविचन्द्रमसौ जीवगौ तयोः विजयकरौ सन्धिकरौ स्यातामिति ॥ १५ ॥

अर्थः-मृतपक्ष में सूर्य होय और जीवपक्ष में चंद्रमा होय तो यात्रा शुभ है, और जीवपक्ष में सूर्य हो और मृतपक्ष में चंद्र होवै तो यात्रा करनेवाला नाशको प्राप्त होवै। चंद्रमा सूर्य दोनों जीवपक्ष में हों तो यात्रा शुभ है और मृतपक्ष नक्षत्र से ग्रस्त नक्षत्र पन्द्रहवां नक्षत्र शुभ है। ग्रस्त नक्षत्र से कर्तरि संज्ञक नक्षत्र शुभ हैं और सूर्य जीवपक्ष मे हो तो किलावाले राजाकी जीत होवै। और चंद्रमा जीवपक्ष में हो तो चढ़नेवाले राजा की जीत होवै और दोनों जीवपक्ष में होवैं तो मेल करा देवै ॥ १५ ॥

कुलाकुलादियोग कहते हैं-

स्वात्यन्तकाहिवसुपौष्णकरानुराधा-
दित्यभ्रवाणि विषमास्तिथयोऽकुलाः स्यु।
सूर्येंदुमंदगुरवश्च कुलाकुला ज्ञो-
मूलांबुपेशविधिभं दशषड्द्वितिथ्यः ॥ १६ ॥
पूर्वाश्वीज्यमघेंदुकर्णदहनद्वीशेंद्रचित्रास्तथा
शुक्रारौ कुलसंज्ञकाश्च तिथयोऽर्काष्टेंद्रवेदैर्मिताः।
यायी स्यादकुले जयी च समरे स्थायी च तद्वत्कुले
संधिः स्यादुभयोः कुलाकुलगणे भूमीशयोर्युध्यतोः१७

(अन्वयः) स्वात्यन्तकाहिवसुपौष्णकरानुराधादित्यभ्रवाणि विषमास्तिथयः सूर्येन्दुमन्दगुरवश्च वासराः एते प्रत्येकम् अकुला अकुलसंज्ञकाः स्युः। ज्ञोमूला-

स्युपेशविधिभं दशषड्द्वितीथ्यः एते प्रत्येकम् कुलाकुलाः कुलाकुलसंज्ञकाः स्युः ॥ १६ ॥

( अन्वयः ) पूर्वाश्विज्यमघेन्दुकर्णदिहनद्वीशेन्द्रचित्राः तथा शुक्रारौ अर्काष्टेन्द्रवेदैर्मितास्तिथयश्च कुलसंज्ञकाः स्युः । अकुले अकुलसंज्ञके तिथिनक्षत्रवारगणे समरे संग्रामे सति यायी राजा जयी स्यात् यदि कुलसंज्ञके तिथिनक्षत्र वारगणे सति स्थायी राजा तद्वत् विजयी स्यात् कुलाकुलगणे युध्यतोः उभयोर्भूमीशयोः संधिः स्यात् ॥ १७ ॥

अर्थः—स्वाती, भरणी, आश्लेषा, धनिष्ठा, रेवती, हस्त, अनुराधा, पुनर्वसु तीनों उत्तरा रोहिणी यह बारह नक्षत्र, विषम ( प्रतिपदा, तीज, पञ्चमी, सप्तमी, नवमी, एकादशी, त्रयोदशी पूर्णिमा यह आठ ) तिथि एतवार, सोमवार, शनिश्चर, बृहस्पति, ये चार वार अकुल संज्ञक है। बुधवार मूल शतभिष आर्द्रा अभिजित् ये चार नक्षत्र दशमी, छठ, द्वितीया ये न्यारे २ कुलाकुल संज्ञक हैं ॥ १६ ॥ तीनों पूर्वा, अश्विनी, पुष्य, मघा, मृगशिरा, श्रवण, कृत्तिका, विशाखा ज्येष्ठा चित्रा ये बारह नक्षत्र, शुक्र, मंगलवार, द्वादशी, अष्टमी, चतुर्दशी, चतुर्थी ये चार तिथि एक एक कुल संज्ञक हैं। यदि अकुल संज्ञक तिथिवार नक्षत्रों में युद्ध आरम्भ होवै तो चढ़ाई करनेवाला राजा की जय होय। कुल संज्ञक तिथि वार नक्षत्र में किलावाले राजा की जय होय कुलाकुला योग में परस्पर मिलाप हो जाय ॥ १७ ॥

मार्ग में राहुचक्र—

**स्युर्धर्मे दस्रपुष्योरगवसुजलपद्वीशमैत्राण्यथार्थे**
**याम्याजांघ्रींद्रकर्णादितिपितृपवनोडून्यथो भानि कामे ।**
**वह्न्यार्द्राम्बुध्न्यचित्रानिर्ऋतिविधिभगाख्यानि मोक्षेऽथ रोहिण्याप्येंद्वंत्यर्क्षविश्वार्यमभदिनकरक्षाणि पथ्यादिराहौ ॥१८॥**

( अन्वयः ) अथ पथ्यादिराहौ पथिराहुचक्रे दस्रपुष्योरगवसुजलपद्वीश मैत्राणि नक्षत्राणि धर्मे स्युः अथ याम्याजांघ्रीन्द्रकर्णादितिपितृपवनोडूनि भानि अर्थे स्युः अथ वह्न्यार्द्राबुध्न्यचित्रानिर्ऋतिविधिभगाख्य नि नक्षत्राणि कामे स्युः अथ रोहिणी आप्यंपूर्वाषाढा, मृगः अन्त्यरेवती विश्वमुत्तराषाढा अर्यमभमुत्तराफल्गुनी दिनकरःहस्तः एतानिभानिमोक्षेस्युः ॥ १८ ॥

अर्थः-अश्विनी पुष्य, आश्लेषा, धनिष्ठा, शतभिष, विशाखा और अनुराधा ये नक्षत्र धर्मस्थान में स्थान करै। भरणी, पूर्वभाद्रपदा, ज्येष्ठा, श्रवण पुनर्वसु, मघा, स्वाती, ये नक्षत्र अर्थस्थान में स्थित करै। कृत्तिका, आर्द्रा, उत्तराभाद्रपद, चित्रा, मूल, अभिजित्, पूर्वाफाल्गुनी ये नक्षत्र, कामस्थान में लिखै। रोहिणी, पूर्वाषाढ, मृगशिरा, रेवती उत्तराषाढ, उत्तराफाल्गुनी, हस्त ये नक्षत्र मोक्ष स्थान में लिखना इसीको पथि राहुचक्र कहते हैं ॥ १८ ॥

राहुचक्र का फल-

धर्मगे भास्करे वित्तमोक्षे शशी वित्तगे धर्ममोक्षस्थितः शस्यते।
कामगे धर्ममोक्षार्थगः शोभनो मोक्षगे केवलं धर्मगः प्रोच्यते१६

( अन्वयः ) धर्मगे धर्मभागे स्थिते भास्करे सति चेद्वित्तमोक्षे शशी अर्थमार्गे वा शशी स्यात्तदा शस्यते वित्तगे अर्थगे भास्करे सति धर्ममार्गगः मोक्षमार्गगो वा शशी शोभनः अथ कामगे भास्करे सति धर्ममोक्षार्थगः शशि शोभनः मोक्षगे भास्करे सति केवलं धर्मगः शशी शोभनो प्रोच्यते अर्थात्तद्विपरीतावस्थितयोर्द्वयोः सूर्याचन्द्रमसोरशुभत्वं स्यात् ॥ १६ ॥

अर्थः-धर्म मार्ग में सूर्य स्थित होवै और अर्थ-मोक्ष स्थान में चन्द्रमा हो तो शुभ है। अर्थ स्थान में सूर्य और धर्म-मोक्ष स्थान में चन्द्रमा होवे तो शुभ है। काम स्थान में स्थित रवि और धर्म अर्थ मोक्ष इन स्थानों में स्थित चंद्रमा होवै तो शुभ है। मोक्ष में सूर्य और धर्म में चन्द्रमा हो तो भी शुभ है इनसे विपरीत स्थित सूर्य चन्द्रमा हो तो यात्री को अशुभ है ॥ १६ ॥

तिथिचक्रका प्रकार-

पौष पक्षत्यादिका द्वादशैवं
तिथ्यो माघादौ द्वितीयादिकास्ताः।
कामात्तिस्रः स्युस्तृतीयादिवच्च
यानेप्राच्यादौ फलं तत्र वक्ष्ये ॥ २० ॥
सौख्यं क्लेशो भीतिरर्थागमश्च
शून्यं नैस्व्यं निःस्वता मिश्रता च।

द्रव्यक्लेशो दुःखमिष्टाप्तिरर्थो
लाभः सौख्यं मंगलं वित्तलाभः ॥ २१ ॥
लाभो द्रव्याप्तिर्धनं सौख्यमुक्तं
भीतिर्लाभो मृत्युरर्थागमश्च ।
लाभः कष्टद्रव्यलाभौ सुखं च
कष्टं सौख्यं क्लेशलाभौ सुखं च ॥ २२ ॥
सौख्यं लाभः कार्यसिद्धिश्च कष्टं
क्लेशः कष्टासिद्धिरर्थो धनं च ।
मृत्युर्लाभो द्रव्यलाभश्च शून्यं
शून्यं सौख्यं मृत्युरत्यन्तकष्टम् ॥ २३ ॥

( अन्वयः ) अत्र पौषे पौषमासे पक्षतिः प्रतिपत् तदादिकाः द्वादशतिथयोऽधोधो लेख्याः माघादौ माघादिमासेषु द्वितीयादिकास्तिथयो लेख्याः ( यथा ) माघे माघमासे द्वितीयादिकाः फाल्गुने तृतीयादिकाः चैत्रे चतुर्थ्यादिका एवं वैशाखादिमासेषु पञ्चम्यादिका द्वादश द्वादश तिथयो लेख्याः तास्तिथ्यादिकाः कामात्त्रयोदशीतस्तिस्रस्त्रयोदशीचतुर्दशीपञ्चदश्यस्तृतीयादितिथिवत्स्युः ( यथा ) त्रयोदशी तृतीयावत् चतुर्दशी चतुर्थीवत्पञ्चदशी पञ्चमीवत्स्युरित्यर्थः तत्र प्रत्यादौ याने पूर्वादिदिग्गमने शुभाशुभं फलं सौख्यं क्लेश इत्यादिनावृत्तत्रयेण वदेत् सौख्यं क्लेशइत्यादिवृत्तत्रयंस्पष्टार्थमेव ( यथा ) तत्र पौषमासे प्रतिपादि दिक्चतुष्टये सौख्यं क्लेशोऽर्थागमश्चेति फलचतुष्टयं क्रमेण ज्ञेयम् एवंद्वितीयादिष्वपि क्रमेण दिक्चतुष्टये फलंस्यात् तदेतत्सर्वं माघादिमासेषु द्वितीयादि तिथिषु ज्ञेयमित्यर्थः ॥२०-२१-२२-२३ ॥

अर्थः—पौष के महीने से बारह मास बराबर लिखै और उतने ही १२ कोष्ठ नीचे लिखै यानी १४४ कोठे हुए उनमें कृष्ण और शुक्लपक्ष की प्रतिपदा से लेकर लिखै ॥ २० ॥ पूर्व दक्षिण पश्चिम उत्तर इनको क्रम से सौख्य, क्लेश, भीति, अर्थागम, शून्य नैस्स्य निःस्वत्व मिश्रता द्रव्यक्लेश, दुःख इष्टाप्ति

अर्थलाभ, लाभ, सौख्य, मंगल वित्तलाभ ॥ २१ ॥ लाभ द्रव्यप्राप्ति, धन, सौख्य, भीति, लाभ, मृत्यु, अर्थागम, लाभ कष्ट द्रव्यलाभ, सुख कष्ट, सौख्य, क्लेश, लाभ, सुख ॥ २२ ॥ सौख्यलाभकार्य सिद्धि कष्ट क्लेश कष्ट से सिद्धि अर्थ, धन मृत्यु, लाभ, द्रव्यलाभ, शून्य शून्य सौख्य, मृत्यु, अत्यन्त कष्ट, यह फल क्रम से जाने ॥ २३ ॥

सब अंकों का ज्ञान—

तिथ्यृक्षवारयुतिरद्रिगजाग्नितष्टो
स्थानत्रयेऽत्र वियति प्रथमेऽतिदुःखी ।
मध्ये धनक्षतिरथो चरमे मृतिः स्या-
त्स्थानत्रयेऽकयुजि सौख्यजयौ निरुक्तौ ॥ २४ ॥

(अन्वयः) अत्र तिथ्यृक्षवारयुतिः तिथिनक्षत्रवाराणां युति स्थानत्रये स्थाप्या क्रमेण अद्रिगजाग्निभिश्च तष्टा भक्तावशिष्टा सति प्रथमे स्थानेवियति शून्ये सति अतिदुःखी यात्राकार्ता स्यात् एवं मध्ये द्वितीयस्थाने वियति सति धनक्षतिर्द्रव्यनाशः अथ चरमे तृतीयस्थाने वियति सति मृतिः स्यात् स्थानत्रयेऽकयुजि सौख्यजयौ निरुक्तौ भवेताम् ॥ २४ ॥

अर्थः—शुक्लपक्ष की प्रतिपदा से लेकर तिथि, वार नक्षत्र इनके योग को तीन जगह स्थापन करै और क्रम से सात आठ तीन का भाग देने से जो प्रथम स्थान में शून्य बचै तो यात्रा करनेवाला दुःखी होय। द्वितीय स्थान में शून्य बचने से धन नाश तीसरे स्थान में यदि शून्य होवे तो मृत्यु होय। और तीनों स्थानों में शून्य न आवै तो सौख्य और जय होय ॥ २४ ॥

अथ महाडल और भ्रमण योग-

रवेर्भतोऽब्जभान्मितिर्नगावशेषिता द्व्यगाः ।
महाडलो न शस्यते त्रिषण्मता भ्रमो भवेत् ॥ २५ ॥

(अन्वयः) रवेर्भतः सूर्यनक्षत्रादब्जभस्य चन्द्र नक्षत्रस्यो मितिर्गणना कार्या सा नगैः सप्तभिरव शेषिता सती द्व्यगा द्विशेषमिता सप्तशेषमिता वा भवेत्तदा महाडलो योगः न शस्यते प्रयुक्तप्रकारेण यदि त्रिषण्मिता त्रिशेषमिता षट् शेषमिता वा स्यात्तदा भ्रमणाख्यो योगः स्यात्सोपि न शस्यते ॥ २५ ॥

अर्थः—सूर्य नक्षत्र से चन्द्रनक्षत्र तक गिन कर उसमें सात का भाग देवै यदि दो बचे या सात बचै तो महाडल दोष कहना सो यात्रा में शुभ नहीं है और जो तीन या छ बचै तो भ्रमण नामदोष होता है सो भी यात्रा में अशुभ है ॥ २५ ॥

हैवरसंज्ञकयोग-

**शशांकभं सूर्यभतोऽत्र गण्यं पक्षादितिथ्या दिनवासरेण ।**
**युतं नवाप्तं नगशेषकं चेत्स्याद्धैवरं तद्गमनेऽतिशस्तम् ॥२६॥**

( अन्वयः ) अत्र सूर्यभतः शशांकभं गण्यं पक्षादितिथ्या पक्षस्य शुक्लस्य कृष्णस्य च.दिः प्रतिपत्तस्याः सकाशाद्गतयानया तिथ्या युतं दिनवासरेण रविवारादिना च युतम्, तत्र नवाप्तं नवभि ९ राप्तं भक्तं नगशेषकं चेत्तदा हैवरं हैवराख्यम्, गमनेऽतिशस्तं शुभंस्यात् ॥ २६ ॥

अर्थः—सूर्य के नक्षत्र से चन्द्रमा के नक्षत्र तक गिनै और उसी में तिथिवार गिनकर मिला देवै और नवका भाग देने से यदि सात बचै तो हैवरयोग कहना सो यात्रा में श्रेष्ठ है ॥ २६ ॥

घातचन्द्र और तिथि का परिहार-

**भूपंचांकद्व्यंगदिग्वह्निसप्तवेदाष्टेशार्काश्च घाताख्यचंद्रः ।**
**मेषादीनां राजसेवाविवादे वर्ज्यो युद्धाद्ये च नान्यत्र वर्ज्यः २७**

( अन्वयः ) मेषादीनां मेषादिराशीनां भूपंचांकद्व्यङ्गदिग्वह्निसप्तवेदाष्टेशार्काश्च घाताख्यचन्द्रो ज्ञेयः, यथा मेषस्य प्रथमो मेष एव, वृषस्य पंचमः कन्यास्थः मिथुनस्य नवमः कुम्भस्य इत्यादि. एते घातचन्द्रा ज्ञेया इत्यर्थः, स घातचन्द्रो राजसेवाविवादे यात्रायुद्धाद्ये च वर्ज्यः अन्यत्र विवाहान्नप्राशनादिमंगलकृत्ये न वर्ज्यः ॥ २७ ॥

अर्थ—मेष राशि को जन्म का वृष राशिको पाँचवाँ, मिथुनको नवां, कर्कको दूसरा, सिंह को छठा कन्या का दशवां, तुला को तीसरा वृश्चिकको सातवां, धन को चोथा, मकर को आठवां, कुम्भ को ग्यारहवां, मीनको बारहवां, यह घात चन्द्र हैं सो राजसेवा विवाद युद्ध आदि कार्यों में वर्जित हैं और अगह शुभ हैं ॥ २७ ॥

आग्नेयत्वाष्ट्रजलपित्र्यवासवरौद्रभे ।
मूलब्राह्माजपादर्क्षे पित्र्यमूलाजभे क्रमात् ॥ २८ ॥
रूपद्व्यग्न्यग्निभूरामद्व्यग्न्यब्ध्यब्धियुगाग्नयः ।
घातचन्द्रे धिष्ण्यपादा मेषाद्वर्ज्या मनीषिभिः ॥२९॥

(अन्वयः) आग्नेयत्वाष्ट्रजलपित्र्यवासवरौद्रभे मूलब्राह्माजपादर्क्षे पित्र्यमूलाजभे क्रमात् क्रमेण रूपद्व्यग्न्यग्निभूरामद्व्यग्न्यब्ध्यब्धियुगाग्नयः धिष्ण्यपादाः मेषात् मेषराशितः घातचन्द्रे मनीषिभि. वर्ज्यास्त्याज्याः ॥ २८-२९ ॥

अर्थः—कृत्तिका, चित्रा, शतभिषा, मघा, धनिष्ठा, आर्द्रा, मूल, रोहिणी, पूर्वाभाद्रपद, मघा मूल, पूर्वाभाद्रपद यह मेषादि बारहों राशि के क्रम से घात नक्षत्र है ॥ २८ ॥ और किसी २ आचार्य का मत है कि मेषराशिवाले को कृत्तिका का प्रथम चरण वृषराशि को चित्रा का दूसरा चरण मिथुन राशि को शतभिषा का तीसरा चरण, कर्क राशि को मघा का तीसरा चरण, सिंह राशि को धनिष्ठा का प्रथम चरण, कन्या राशिको आर्द्राका तीसरा चरण, तुलाराशि को मूलका दूसरा चरण, वृश्चिकराशिको रोहिणीका चौथा चरण, धन राशिको पूर्वाभाद्रपद का चौथा चरण, मकर राशिवाले को मघाका चौथा चरण, कुम्भराशि को मूल का चौथा चरण, मीनराशि को पूर्वाभाद्रपद का तीसरा, घात है इसको इसी क्रम से जाने ॥ २९ ॥

घात तिथि का विचार—

गोस्त्रीझषे घाततिथिस्तु पूर्णा भद्रा नृयुक्कर्कटकेऽथ नंदा ।
कौर्प्याजयोर्नक्रघटे च रिक्ता जया धनुः कुम्भहरौ न शस्ता॥३०॥

(अन्वयः) अथ गोः वृष, स्त्री कन्या, झषो मीनः, एतद्राशिमिति नरे पूर्णा तिथिः घाततिथिः, नृयुक्मिथुनं कर्कटकः प्रसिद्धः अनयोर्भद्रातिथिः घाततिथि, कौर्प्यो वृश्चिक, अजो मेष. एतयोर्नन्दातिथिः घाततिथि, धनुः कुम्भसिंहानां जया तिथिः घाततिथि, एते घाततिथयो यात्रायां युद्धादौ च न शस्ता इति ॥ ३० ॥

अर्थः-वृष कन्या मीन राशिको पंचमी दशमी पूर्णिमा घात, मिथुन कर्क राशि को द्वितीया द्वादशी सप्तमी घात वृश्चिक मेषराशि को प्रतिपदा षष्ठी

एकादशी घात, मकर तुला राशिको चौथा चतुर्दशी नवमी घात, और धन कुम्भ सिंह राशिको तृतीया त्रयोदशी अष्टमी घात तिथि होती है सो यात्रा में अशुभ है ॥ ३० ॥

घातवारों का विचार—

नक्रे भौमो गोहरिस्त्रीषु मंदश्चंद्रो द्वंद्वेऽर्कोजभे ज्ञश्च कर्के।
शुक्रः कोदंडालिमीनेषु कुम्भे जूके जीवो घातवारा न शस्ता ३१॥

( अन्वयः ) नक्रे भौमः मकरराशिनां भौमे घातवारः, गोहरिस्त्रीषु वृषसिंहकन्यासु मन्दः शनिर्घातवारः, द्वन्द्वे मिथुने चन्द्रः अजभे मेषेऽर्कः, कर्कश्च बुधः धनुर्वृश्चिकमीनेषु शुक्रः जूकस्तुला कुम्भतुलयोर्जीवो गुरुर्घातवार इत्यर्थः घातवारा अपि यात्रादौ न शस्ताः ॥ ३१ ॥

अर्थः-मकर राशि के पुरुष को मंगलवार घात है, वृष सिंह कन्या को शनिश्चर घात है, मिथुन को सोमवार, मेष को रविवार, कर्क को बुधवार, धन मीन वृश्चिक को शुक्रवार, कुम्भ तुला को वृहस्पति घात है, इन घातवारों में यात्रा अशुभ है ॥ ३१ ॥

घातनक्षत्रोंका विचार—

मघाकरस्वातिमैत्रमूलश्रुत्यंबुपांत्यभम्।
याम्यब्राह्मेशसार्पं च मेषादेर्घातभं न सत् ॥ ३२ ॥

( अन्वयः ) मघाकरस्वातिमैत्रमूलश्रुत्यंबुपांत्यभं याम्यब्राह्मेशसार्पं च मेषादेर्घातभं नक्षत्रं, स्पष्टार्थमेतदपि यात्रादौ न शस्तम् ॥३२॥

अर्थः-मेष को मघा, वृष को हस्त, मिथुन को स्वाती, कर्क को अनुराधा, सिंह को मूल, कन्या को श्रवण, तुला को शतभिष, वृश्चिक को रेवती, धन को भरणी, मकर को रोहिणी कुम्भ को आर्द्रा, मीन को आश्लेषा ये घातनक्षत्र यात्रा में श्रेष्ठ नहीं हैं ॥ ३२ ॥

घातलग्नों का विचार—

भूमि १ द्व्य २ब्ध्य ४ द्रि ७ दिक् १० सूर्या १२
गा ६ ष्टां ८ के ९ शा ११ ग्नि १२ सायकाः ५।

मेषादिघातलग्नानि यात्रायां वर्जयेत्सुधीः ॥३३॥

( अन्वयः ) भूमि १ द्वय २ वेद ४ द्रि ७ दिक् १० सूर्या १२ गा ६ ष्टां ८ के ६ शा ११ त्रि ३ सायकाः ५ मेषादि मेषादिराशीनां घ तलग्नानि सुधीः यात्रायां वर्जयेत्, स्पष्टमेवार्थः ॥ ३३ ॥

अर्थः-मेषको आदि लेकर बारहां राशियों को क्रम से यह लग्न घातक है। मेष, वृष, कर्क तुला, मकर मीन, कन्या वृश्चिक, धनु कुम्भ, मिथुन, सिंह, ये घात लग्नयात्रा में वर्जित हैं ॥ ३३ ॥

नव ६ भूम्यः १ शिव ११ वह्नयो ३ ऽक्ष ५ विश्वे १३-
ऽर्क १२ कृताः ४ शक्र १४ रसा ६ स्तुरंग ७ तिथ्यः १५ ।
द्वि २ दिशो १० मा ३० वसव ८ श्च पूर्वतः स्यु-
स्तिथयः संमुखवामगा न शस्ताः ॥ ३४ ॥

( अन्वयः ) नवभूम्य इति एतास्तिथयः पूर्वतः पूर्वदिशामारभ्य अष्टदिक्षु ज्ञेयाः, यथा पूर्वस्यां नवभूम्यः नवमी प्रतिपच्च, आग्नेय्यां शिववह्नय एकादशी तृतीया च, एवमग्रेपि एतास्तिथयो योगिन्य इति जीर्णास्तास्तिथयः संमुखवामगा न शस्ता ॥ ३४ ॥

अर्थः-प्रतिपदा और नवमीको पूर्व दिशामें योगिनीका वास रहता है। एकादशी और तृतीयाको अग्निकोणमें, पञ्चमी तेरसको दक्षिण दिशामें, चौथ द्वादशीको नैर्ऋत्य कोणमें, छठ चतुर्दशीको पश्चिम दिशामें, सप्तमी पूर्णिमाको वायव्य कोणमें द्वितीया दशमीको उत्तर दिशामें, अमावास्या, और अष्टमीको ईशान कोणमें योगिनीका वास होता है, सन्मुख और बायें तरफ अशुभ और पीछे दाहिने शुभ होती है ॥ ३४ ॥

कालपाशयोग--

कौबेरीतो वैपरीत्येन कालो वारेऽर्काद्ये संमुखे तस्य पाशः ।
रात्रावेतौ वैपरीत्येन गण्यौ यात्रायुद्धे संमुखे वर्जनीयौ ॥३५॥

( अन्वयः ) कौबेरी उत्तरादिक् तस्याः विपरीतदिक्षु अर्काद्ये वारे कालः स्यात्। तस्य संमुखे पाश तद्यथा रवावुत्तरदिशि कालः दक्षिणे पाश इत्यर्थः

चन्द्रे वायव्यां कालः आग्नेय्यां पाशः, एवं भौमादिष्वपि, कालपाशौ रात्रौ वैपरीत्येन गण्यौ यथा-रात्रौ कालदिशि पाश इति वैपरीत्यं ज्ञेयम्, एतौ यात्रायुद्धादिषु संमुखे वर्जनीयौ-इति ॥ ३५ ॥

अर्थः-उत्तरदिशासे सूर्यादि वारों में विपरीत करके कालपाश जानना। जैसे एतवार को उत्तर में काल दक्षिणमें पाश चन्द्रको वायव्यमें काल, अग्निकोणमें पाश ऐसे और भी यह काल और पास रातमें उलटे गिनना यह यात्रामें अति निन्दित है ॥ ३५ ॥

परिघदंडाख्ययोग--

पूर्वादिषु चतुर्दिक्षु सप्तसप्तानलर्क्षतः ।
वायव्याग्नेयदिक्संस्थं पारिघं नैव लंघयेत् ॥३६॥

( अन्वयः ) पूर्वादिष्विति अनलर्क्षतः कृतिकातःसप्तभानि पूर्वस्याम्, मघातः सप्त याम्यायाम् अनुराधातः सप्त पश्चिमायाम्, धनिष्ठातः सप्तभान्युत्तरस्याम्, तत्र वायव्याग्नेयदिक्संस्थं पारिघं पारिघो दण्डः स्यात्तं सर्वथा नोल्लंघयेत् ॥ ३६ ॥

अर्थः-कृत्तिकासे सात नक्षत्र पूर्वमें मघासे सात नक्षत्र दक्षिणमें, अनुराधासे सात नक्षत्र पश्चिममें, और धनिष्ठासे सात उत्तरमें, इस चतुष्कोण चक्रमें, अग्निकोण और वायव्यकोणमें बंधा जो परिघदण्ड है उसे उल्लंघन न करै, जिस दिशाका नक्षत्र होय उसी दिशामें यात्रा करै ॥ ३६ ॥

निंद्य दंडका अपवाद-

अग्नेर्दिशं नृप इयात्पुरुहूतदिग्भै-
रेवं प्रदक्षिणगतो विदिशोऽथ कृत्ये ।
आवश्यकेऽपि परिघं प्रविलंघ्य गच्छे-
च्छूलं विहाय यदि दिक्तनुशुद्धिरस्ति ॥ ३७ ॥

( अन्वयः ) नृपः पुरुहूतदिक् प्राची तत्स्थैः कृत्तिकादिसप्तनक्षत्रैः अग्नेर्दिशमियाद्गच्छेत्। एवमनेन प्रकारेण विदिशः नैर्ऋत्यादिकोणे प्रदक्षिणगतः, अथ आवश्यके कृत्ये कर्तव्ये परिघदण्डमपि लंघयित्वा नृपो गच्छेत्, परन्तु शूलं विहाय त्यक्त्वा यदि दिक्तनुशुद्धिरस्ति ॥ ३७ ॥

अर्थः-यदि राजा पूर्व दिशाके कृत्तिकादि नक्षत्रोंमें अग्निकोणको यात्रा करै, इसी तरह दक्षिण दिशाके नक्षत्रोंसे नैर्ऋत्यकोण और पश्चिमके नक्षत्रसे वायव्य-कोण यात्रा करै, उत्तर के नक्षत्रों में ईशानकोणकी यात्रा करै तो शुभ है। यदि आवश्यकीय कार्य होय तो परिघदण्डको उल्लंघन करके दिशाकी लग्न शुद्ध हो तो दिक्शूलको त्याग करके यात्रा करै ॥ ३७ ॥

दूसरा अपवाद-

**मैत्रार्कपुष्याश्विनभैर्निरुक्ता यात्रा शुभा सर्वदिशासु तज्ज्ञैः।**
**वक्रीग्रहः केंद्रगतोऽस्यवर्गो लग्ने दिनं चास्य गमे निषिद्धम्॥३८**

(अन्वयः) मैत्रार्कपुष्याश्विनभैः नक्षत्रैः सर्वदिशासु चतुर्दिक्षु तज्ज्ञैर्ज्यौतिर्विकैर्यात्रा शुभा निरुक्ता निगदिता। वक्र ग्रहो यदि केन्द्रगः स्यात्तर्हि गमे यात्रायां निषिद्धः, अथवास्य वक्रीग्रहस्य लग्ने वर्गः षड्वर्गश्चेत्सोपि गमने निषिद्धः, चास्य वक्रीग्रहस्य दिनं वारोपिगमने निषिद्धमिति ॥ ३८ ॥

अर्थः-अनुराधा हस्त पुष्य अश्विनी इन नक्षत्रो में सम्पूर्ण दिशा में यात्रा करना और वक्री ग्रह केन्द्रमें होय तो अशुभ है। वक्रीग्रह का लग्न में षड्वर्ग भी निषिद्ध है और वक्री ग्रहका दिन भी अशुभ है ॥ ३८ ॥

अयनशूल-

**सौम्यायने सूर्यविधू तदोत्तरां**
**प्राचीं व्रजेत्तौ यदि दक्षिणायने।**
**प्रत्यग्यमाशां च तयोर्दिवानिशं**
**भिन्नायनत्वेऽथ वधोऽन्यथा भवेत्॥ ३९॥**

(अन्वयः) यदि सूर्यचन्द्रौ सौम्यायने उत्तरायणगतौ स्यातां तदा उत्तरां प्राचींवा व्रजेत्, तद्दिङ्मुखयात्रा शुभेत्यर्थः यदि तौ रविचन्द्रौ दक्षिणायनगतौ स्यातां तदा प्रत्यग्यमाशांच प्रतीचीं दक्षिणां वा व्रजेत्, अथ तयोर्भिन्नायनत्वे-अयनभेदे सति दिवानिशंव्रजेत्, (यथा) सूर्यो यस्मिन्तपते तां दिवा दिशं व्रजेत्, एवं चन्द्रोऽपि रात्रौ ज्ञेयम्, अथान्यथा चेत्कुर्यात्तदा वधो मरणं भवेत् ॥ ३९ ॥

अर्थः-यदि सूर्य चन्द्रमा उत्तरायण मे होवें तो उत्तर और पूर्व दिशा में यात्रा करे और दक्षिणायन सूर्य चन्द्रमा में दक्षिण और पश्चिम यात्रा शुभ होती है।

जिस अयनमें सूर्य हो उस दिन उस दिशाको दिनमें जावै और चन्द्रमा जिस अयनमें होवे उस दिन उसदिशामें रात्रिमें यात्रा करै ॥ ३९ ॥

संमुख शुक्रका दोष—

उदेति यस्यां दिशि यत्र याति
गोलभ्रमाद्वाथ ककुब्भसंघे ।
त्रिधोच्यते संमुख एव शुक्रो
यत्रोदितस्तां तु दिशं न यायात् ॥ ४० ॥

( अन्वयः ) शुक्रो यस्यां दिशि प्राच्यां प्रतीच्यां वा उदेति कालांशवशेनोदयं करोति तत्र गन्तुः पुंसः शुक्रः संमुखः अयमेकः प्रकारः; अथवा गोलभ्रमवशेन यत्र यस्यां दिशि उत्तरस्यां दक्षिणस्यां वा यदि याति गच्छति तत्र गन्तुः पुंसः संमुखः शुक्रः स्यात् अयं द्वितीयः प्रकारः, अथ यत्र ककुब्भसंघे प्राच्यादिदिशि कृत्तिकादि काद्विन्यासवशेन यद्दिङ्नक्षत्रे चरति तत्रदिशि गन्तुः संमुखः शुक्रः स्यादित्ययंतृतीयः प्रकारः, एवं शुक्रस्त्रिधा प्रकारेण संमुखं यत्र यस्यांदिशि उदि शुक्रो दृश्यते तांतः दिशमेव न गच्छेत् ॥४०॥

अर्थः—शुक्र जिस दिशा में उदय होय, अथवा दक्षिण उत्तर गोलके भ्रमणसे जिस दिशामें हो और कृत्तिकादि नक्षत्र करके पूर्वादि दिक् विषे, जिस दिशामें हो यह ३ प्रकार शुक्र के दिशा जानने का है परन्तु इन तीनों में जिस दिशामें उदय होय वही प्रधान मानने योग्य है उस दिशाकी यात्रा अशुभप्रद है ॥ ४० ॥

वक्रास्तादिदोष अपवादसहित—

वक्रास्तनीचोपगते भृगोः सुते
राजा व्रजन्याति वशं हि विद्विषाम् ।
बुधोऽनुकूलो यदि तत्र सञ्चलन्
रिपूञ्जयन्नैव जयः प्रतीदुजे ॥ ४१ ॥

( अन्वयः ) भृगोः सुते शुक्रे वक्रास्तनीचापगते वक्रोपगते अस्तोपगते वा उपलक्षणत्वाद्ग्रहयुद्धपराजिते वर्णरहिते वा सति राजा परगाष्ट्रं व्रजन् सन् हि निश्चयेन विद्विषां शत्रूणां वशं याति निबद्धोभवतीत्यर्थः, तत्र शुक्रास्ते यदि

बुधोनुकूलः पृष्ठदिक् संस्थो भवेत्तदा संचलन्गच्छन् राजा रिपून् शत्रून् जयेत्, प्रतीन्दुजे बुधसंमुखत्वे सति गन्तूराज्ञो नैव जयः किंतु पराजयइति॥ ४१ ॥

अर्थः-शुक्र वक्री, अस्त, नीचका होवै ऐसे समय में यदि राजा युद्धके लिये जावै तो शत्रु के वशमें हो शुक्रके अस्तमें बुध पीछे हो तो जय प्राप्त होवै यदि सन्मुख हो और यात्रा करै तो यात्री राजा अवश्य हारही जावे इसमें कुछ संशय नही है ॥ ४१ ॥

**यावच्चंद्रः पूषभात्कृत्तिकाद्ये पादे शुक्रोंऽधो न दुष्टोऽग्रदक्षे। मध्येमार्गं भार्गवास्तेऽपि राजा तावत्तिष्ठेत्संमुखत्वेऽपि तस्य ४२**

( अन्वयः ) चन्द्रो यदा पूषभाद्रेवतो नक्षत्रादारभ्यकृत्तिकाद्ये पादे रेवत्यश्विनी भरणी कृत्तिका प्रथमचरणे यावच्चन्द्रस्तिष्ठति तावच्छुक्रोन्धो ज्ञेयः, दा शुक्रोन्धो यदा भवेत्तदा अग्रे संमुखे दक्षे दक्षिणभागे च दुष्टो न स्यात्, सुमुहूर्तप्रस्थितो राजा मार्गमध्ये यदि भार्गवास्ते शुक्रास्तो भवेत्तावत्कालं तस्मिन्नेव प्रयाणे तिष्ठेत् यावच्छुक्रोदयो भवेत्, यदि शुक्रो गन्तू राज्ञः संमुखो दैववशात्तावत्तस्य शुक्रस्य संमुखत्वेऽपि तस्मिन्नेव प्रयाणे तिष्ठेत् ॥ ४२ ॥

अर्थ.—यदि अंध शुक्र हो तो सन्मुख और दक्षिण दोष नहीं होता " रेवती नक्षत्र लेकर कृत्तिकाके प्रथम चरण तक शुक्र अन्ध रहता है यह सामने और दाहिने अशुभ नहीं होता और यात्रा करके मार्ग में शुक्र अस्त और सन्मुख हो जावें तो वहीं पर ठहर जावै शुक्र शुद्ध होने पर यात्रा करै ॥ ४२ ॥

यात्रा में निषिद्ध लग्न—

**कुम्भकुम्भांशकौ त्याज्यौ सर्वथा यत्नतो बुधैः। तत्र प्रयातुर्नृपतेरर्थनाशः पदे पदे ॥ ४३ ॥**

( अन्वयः ) यत्र प्रयाण समये बुधैः यत्नतः सर्वथा कुम्भकुम्भांशकौ त्याज्यौ वर्जनीयौ, तत्र तस्मिन् कुम्भकुम्भांशकौ नृपतेः प्रयातु गच्छतुः तदा पदे पदे अर्थ नाशः धननाशः स्यात् ॥ ४३ ॥

अर्थः—पण्डितों करके सदैव कुम्भ लग्न और कुम्भका नवमांश त्याज्य है यदि यात्रा करै तो राजाकी लक्ष्मी सदैव पद २ पर नाश होय ॥ ४३ ॥

**अथ मीनलग्न उतवा तदंशके चलितस्य वक्रमिह वर्त्म जायते।**

जनिलग्नजन्मभपती शुभग्रहौ भवतस्तदा तदुदये शुभागमः ॥४४॥

( अन्वयः ) अथ उत वितर्के इह यात्रासमये मीनलग्ने वा तत्रत्विलग्नान्तरे तदंशके मीनांशे वा चलितस्य राज्ञो वर्त्म वक्रं कुटिलं जायते, जनिलग्नजन्मभपती जनिर्जन्मकालीनलग्नं जनिलग्नं जन्मभं जनराशिः तयोर्जन्मराश्योः पतो स्वामिनौ शुभग्रहौ तदुदये यात्रालग्ने भवतस्तदा गमो गमनं शुभः स्यात् एवं जन्म लग्नं जन्मराशिश्च यात्रा लग्ने भवतस्तदा गमनं शुभः स्यात्, पापश्चा शुभं भवेत् ॥ ४३ ॥

अर्थः—मीन लग्न अथवा मीन लग्न के नवमांश में यदि राजा यात्रा करै तो मार्ग टेढ़ा मिले और जन्म लग्न व जन्म राशिका स्वामी शुभग्रह लग्न में होवै तो यात्रा शुभप्रद है ॥ ४३ ॥

दूसरा योग—

जन्मराशितनुतोऽष्टमेऽथवा स्वारिभाच्च रिपुभे तनुस्थिते ।
लग्नगोस्तदधिपा यदाथवा स्युर्गतं हि नृपतेर्मृतिप्रदम् ॥४५॥

( अन्वयः ) जन्मराशितनुतः स्वस्य जन्मराशेर्जन्मलग्नाच्चाष्टमे राशौ तनुस्थिते लग्नस्थे, तथा स्वारिभात् स्वशत्रो र्भाद्राशेर्लग्नाच्च रिपुभे षष्ठराशौ तनुस्थिते वा सति, अथवा तदधिपाः स्वराशिलग्नाभ्यामष्टमभवने. स्वशत्रो र्जन्मराशिलग्नाभ्यां षष्ठभवने तेषां स्वामिनो यात्रा लग्नगताः स्युर्यदा तदा हि निश्चयेन नृपतेर्गतं गमनं मृतिप्रदं मरणं भवेदिति ॥ ४५ ॥

अर्थः—जिन जन्मराशिसे अथवा जन्मलग्नसे आठवीं राशि में लग्न स्थित हो,वैं और जाने वाले शत्रु की राशि व लग्न से छठी राशि में लग्न स्थिर हो अथवा अपनी राशि और लग्न से अष्टम भवनके स्वामी या अपने शत्रुकी जन्म राशि और लग्नसे छठवीं राशिके स्वामी यात्रा लग्नमें हों तो यात्रा करने से राजा की मृत्यु होवे ॥ ४५ ॥

दूसरा शुभलग्न–

लग्ने चंद्रे वापि वर्गोत्तमस्थे यात्रा प्रोक्ता वांछितार्थैकदात्री ।
अंभोराशौ वा तदंशे प्रशस्तं नौकायानं सर्वसिद्धिप्रदायि ॥४६॥

(अन्वयः) अत्र मीनकुम्भव्यतिरिक्ते यस्मिन्कस्मिंश्चिल्लग्ने वर्गोत्तमस्थे वर्गोत्तमनवांशगते सति वा अथवा चन्द्रे वर्गोत्तमस्थे सति यात्रा प्रोक्ता कथिता वांच्छितार्थस्य मनोभीष्टार्थस्यैकाऽद्वितीया दात्री, अम्भोराशौ जलचरराशौ यात्रा लग्नगते अथवा लग्नान्तरे तदंशे जलचरांशे सति नौकायानं प्रशस्तं सर्वसिद्धि प्रदायि स्यात् ॥ ४६ ॥

अर्थः—मीन और कुम्भ वर्जित कोई लग्न वर्गोत्तम नवमांशमें स्थित होवे अथवा चन्द्रमा वर्गोत्तममें स्थित होवे तो यात्रा वांच्छित फल देनेवाली होवै और जलराशि लग्नमें होवै अथवा लग्नमें जलराशिका अंश होवै तो नौकाकी यात्रा सम्पूर्ण सिद्धि को देने वाली होती है ॥ ४६ ॥

अन्य प्रकारसे लग्न—

दिग्द्वारभे लग्नगते प्रशस्ता यात्रार्थदात्री जयकारिणी च ।
हानिं विनाशं रिपुतो भयं च कुर्यात्तथा दिक्प्रतिलोमलग्ने ॥ ४७

(अन्वयः) दिग्द्वारभे लग्नगते लग्नस्थिते यात्रा अर्थदात्री जयकारिणी च यात्रा प्रशस्ता अति शस्ता स्युः, तथा दिक् प्रतिलोमलग्ने लग्नगते सति यदि यात्रां कुर्यात्तदा हानिं यात्राहानिं विनाशं द्रव्यविनाशं रिपुतो भयं च कुर्यात् ॥ ४७ ॥

अर्थः—मेषादिकोंकी पूर्वादि चारो दिशामें स्थित क्रमसे कहनी सो यात्रा के दिशा की राशि लग्नमें होवै तो यात्रा धनके देनेवाली और जयके करनेवाली अति श्रेष्ठ है यदि विपरीत होवै तो हानि विनाश शत्रुसे भय होवै ॥ ४७ ॥

मंगलकारक लग्न—

राशिः स्वजन्मसमये शुभसंयुतो यो
यः स्वारिभान्निधनगोऽपि च वेशिसंज्ञः ।
लग्नोपगः स गमने जयदोऽथ भूप-
योगैर्गमो विजयदो मुनिभिः प्रदिष्टः ॥ ४८ ॥

(अन्वयः) स्वजन्मसमये यो राशिः शुभसंयुतः शुभग्रहैश्चन्द्रबुधगुरुशुक्रैः संयुतोऽस्ति स राशिश्चेद्यात्रालग्नोपगः स्यात्, अथवा स्वारिभान्निधनगः षष्ठे

यो राशिः स चेद्यात्रा लग्नोपगः स्यात्, अथवा यो राशिर्वेशिसंज्ञः सूर्याक्रान्तराशेर्द्वितीयो राशिर्वेशिसंज्ञः स चेद्यात्रालग्नोपगः स्यात्, तदा स राशिर्गमने जयदः स्यात्, अथवा भूपयोगैर्जातकोक्तयात्रालग्नावस्थितै राजयोगैर्गमो मुनिभिर्विजयदः प्रोक्तः ॥ ४८ ॥

अर्थः—जन्मके समय में शुभग्रह सहित जो राशि हो वह यात्रालग्नमें होवे अथवा अपने शत्रुकीजन्म लग्न जन्मराशि से आठवीं जो राशि है सो यात्रा लग्न में होवे और जन्मके समयमें सूर्याकांत राशि से दूसरी राशि लग्नमें स्थित होवे तो यह मुहूर्त यात्रामें जयका देने वाला होता है। जातकमें कहे हुए राजयोगमें यात्रा करनेसे जय होती है ऐसा मुनियोंने कहा है ॥४८॥

दिशाओंके स्वामी—

सूर्यः सितो भूमिसुतोऽथ राहुः
शनिः शशी ज्ञश्च बृहस्पतिश्च ।
प्राच्यादितो दिक्षु विदिक्षु चापि
दिशामधीशाः क्रमतः प्रदिष्टाः ॥ ४९ ॥

(अन्वयः) अथ प्राच्यादितो दिक्षु विदिक्षु चापि क्रमतः सूर्यः सितो भूमिसुतः राहुः शनिः शशिज्ञः बृहस्पतिश्च दिशामधीशाः दिगीश्वराः प्रदिष्टाः कथिताः स्युरिति ॥ ४९ ॥

अर्थः—पूर्वदिशाका स्वामी सूर्य अग्नि कोणका शुक्र दक्षिणका मंगल नैर्ऋत्य का राहु, पश्चिमका, शनिश्वर, वायव्य का चन्द्रमा, उत्तरका बुध और ईशान कोणका बृहस्पति स्वामी होता है ॥ ४९ ॥

दिशाके स्वामीका प्रयोजन—

केन्द्रे दिगधीशे गच्छेदवनीशः ।
लालाटिनि तस्मिन्नेयादरिसेनाम् ॥ ५० ॥

(अन्वयः) दिगधीशे दिक्स्वामिनि सूर्यः सित इत्यादिनोक्ते केन्द्रे केन्द्रवर्तिनि सति अवनीशो राजा गच्छेत् तस्मिन् दिगधीशे लालाटिनि योगे सति अरिसेनां नेयान्न गच्छेत् ॥ ५०॥

अर्थः—केन्द्रमें दिशाका स्वामी होवे तो राजा शत्रुकी सेना में यात्रा करे और लालाटिक योगमें न जाय ॥ ५० ॥

लालाटिक योग—

प्राच्यादौ तरणिस्तनौ भृगुसुतो लाभव्यये भूसुतः
कर्मस्थोऽथ तमो नवाष्टमगृहे सौरिस्तथा सप्तमे ।
चन्द्रः शत्रुगृहात्मजेऽपि च बुधः पातालगो गीष्पति-
र्वित्तभ्रातृगृहे विलग्नसदनाल्लालाटिकाः कीर्तिताः ॥५१॥

(अन्वयः) अथ प्राच्यादौ प्राच्याद्यष्टदिक्षु क्रमेण विलग्नसदनात् यात्रा-लग्नगृहात्तरणिस्तनौ, भृगुसुतः लाभव्यये, भूसुतः भौमः कर्मस्थः दशमस्थः, तमो राहु नवाष्टमगृहे, तथा सौरिः शनिः सप्तमे, चन्द्रः शत्रुगृहात्मजेऽपि, बुधश्च पातालो चतुर्थस्थः गीष्पतिः गुरुर्वित्तभ्रातृगृहे चेत्तदा लालाटिकाः कीर्तिताः कथिताः ॥ ५१ ॥

अर्थः—पूर्वादि अष्टदिशाओं में लग्न आदि स्थानों में सूर्यादि ग्रह होनेसे लालाटिक योग कहा जाता है। जैसे-लग्नमें सूर्य हो तो पूर्व को जानेवाले को लालाटिक योग होता है। ऐसे ही शुक्र ग्यारहवें बारहवें हो तो अग्निकोण में। मंगल नववें हो तो दक्षिण जानेवाले को। राहु नववें आठवें नैर्ऋत्यमें, शनिश्चर सातवें पश्चिममें चन्द्रमा पाँचवें छठे वायव्यमें, बुध सातवें उत्तरमें, बृहस्पति दूसरे तीसरे ईशानमें लालाटिक योग होता है ॥ ५१ ॥

पर्युषित यात्रायोगचतुष्टय—

मृगे गत्वा शिवे स्थित्वादितौ गच्छञ्जयेद्रिपून् ।
मैत्रे प्रस्थाय शाक्रे हि स्थित्वा मूले व्रजंस्तथा ॥ ५२ ॥
प्रस्थाय हस्तेऽनिलतक्षधिष्ण्ये स्थित्वा जयार्थी प्रवसेद्द्विदैवे।
वस्वंत्यपुष्ये निजसीम्नि चैकरात्रोषितः क्ष्मां लभतेऽवनीशः॥५३

(अन्वयः) मृगे मृगनक्षत्रे गत्वा शिवे रौद्रभे स्थित्वादितौ पुनर्वसौ गच्छन् सन् रिपून् शत्रून् जयेत्, तथा मैत्रेऽनुराधायां प्रस्थाय प्रस्थानं कुर्यात् शाक्रे ज्येष्ठायां स्थित्वा मूले व्रजन् सन् हि निश्चयेन शत्रून् जयेत्, हस्ते प्रस्थायानिल-

तत्त्वाष्णिये स्थित्वा द्विदैवे विशाखायां जयार्थी भूपादिः प्रव्रसेद्देशान्तरं गच्छेत्, पुनः वस्वन्त्यपुष्ये धनिष्ठारेवती पुष्येषु निजसीम्नि स्वनगरप्रांते प्रस्थितः सन्यदि एकरात्रोषितः स्यात्तदा अवनीशो राजा क्ष्मां भूमिं लभते जयं प्राप्नोतीति ॥ ५२-५३ ॥

अर्थः-यदि मृगशिरा नक्षत्रमें मुहूर्त्त करके किसी मित्रके मकानमें ठहर जावें और वहांपर आर्द्रा नक्षत्र व्यतीत करके पुनर्वसु नक्षत्रमें जावे तो पहुंचते पहुंचते शत्रुको जीत लेवै और अनुराधा में यात्रा करके ज्येष्ठाको पूर्ववत् व्यतीत करके मूल नक्षत्रमें जावे तो भी शत्रु को जीत लेवै ॥ ५२ ॥ हस्तमें प्रस्थान करके स्वाती चित्रा नक्षत्रमें स्थित होकर विशाखामें यात्रा करै और धनिष्ठा रेवती पुष्य नक्षत्रमें प्रस्थान करके एक रात्रि पर्यन्त अपनी सीमामें रहकर यात्रा करने से राजा पृथ्वीको पाता है चार योग सिद्ध है ॥ ५३ ॥

उषःकालादि समयबल-

**उषःकालो विना पूर्वां गोधूलिः पश्चिमां विना ।**
**विनोत्तरां निशीथः सन् याने याम्यां विनाऽभिजित् ॥५४॥**

( अन्वयः ) पूर्वां विना उषः कालः पश्चिमां विना गोधूलिः उत्तरस्विना निशीथोर्द्धरात्रिः याम्यां दक्षिणां विना अभिजिन्मुहूर्तमपि याने गमने सत्स्यादिति ॥ ५४ ॥

अर्थः—उषःकाल ( प्रातःकाल ) को त्याग करके पूर्वदिशा को जावे। गोधूलि ( सूर्यास्त समय ) को त्यागकरके पश्चिम दिशा को यात्रा करै। निशीथकाल (अर्धरात्रि) को त्याग करके उत्तर दिशाकी यात्रा श्रेष्ठ है। अभिजित् (दोपहर) को त्याग करके दक्षिण दिशाकी यात्रा प्रशस्त है ॥ ५४ ॥

लग्न आदि बारह भावोंकी संज्ञा—

**लग्नाद्भावाः क्रमाद्देह १ कोश २ धानुष्क ३ वाहनम् ४ ।**
**मंत्रो ५ रि ६ मार्ग ७ आयुश्च ८ हृ ९**
**द्व्यापारा १० गम ११ व्ययाः १२ ॥ ५५ ॥**

( अन्वयः ) लग्नात्क्रमाद् देहकोशधानुष्कवाहनं मन्त्रोरिमार्ग आयुश्च हृद्व्यापाराऽऽगमव्ययाः भावाः स्युरिति ॥ ५५ ॥

अर्थः-देह १ कोश २ धानुष्क ३ वाहन ४ मंत्र ५ शत्रु ६ मार्ग ७ आयु ८ हृदय ९ व्यापार १० प्राप्ति ११ खर्च १२ यह बारहलग्नसे भाव जानने.जिस स्थानमें क्रूरग्रह होवें उसको पीड़ा कहनी, जिसमें सौम्य ग्रह होवें उसमें शुभ कहना ॥५५॥

केंद्र आदि में शुभ ग्रह होवें तो—

**केंद्रे कोणे सौम्यखेटाः शुभाः स्युर्याने पापत्र्यायषट्खेषु चंद्रः ।**
**नेष्टो लग्नांत्यारिरंध्रे शनिःखेस्तेऽशुक्रो लग्नेट् नगांत्यारिरंध्रे ५६**

( अन्वयः ) यदि सौम्यखेटाः शुभग्रहाः केन्द्रे कोणे स्युस्तदा याने गमने शुभाः शुभफलदाः स्युः, पापाः पापग्रहास्त्र्यायषट् खेषु तृतीयैकादशषष्ठदशम स्थानस्थाः याने शुभफलदाः स्युः, चन्द्रो लग्नान्त्यारिरन्ध्रे लग्नद्वादश षष्ठाष्टमेषु स्थितो नेष्टोऽशुभफलदः स्यात्, शुक्रोस्ते सप्तमे नेष्टः, लग्नेट् यात्रा लग्नस्वामी नगान्त्यारिरंध्रे सप्तमद्वादशषष्ठाष्टमस्थश्चेत्त शनिष्टोऽशुभफलदो मृत्युदः स्यादिति ॥ ५६ ॥

अर्थः-शुभग्रह १।४।७।१०।९।५। होवें तो शुभ है। और पापग्रह ३।११।६।१० हो तो शुभ है। और चन्द्रमा १।१२।६।८। होवे तो अशुभ है और दशवें शनि सातवें शुक्र हो तो अशुभ है। लग्नस्वामी सातवें बारहवें छठें आठवें स्थानों में हो तो अशुभफलप्रद होता है ॥ ५६ ॥

योग यात्रा और तिससे आरंभ का प्रयोजन-

**योगात्सिद्धिर्धरणिपतीनामृक्षगुणैरपि भूदेवानाम् ।**
**चौराणां शुभशकुनैरुक्ता भवति मुहूर्तादपि मनुजानाम् ॥५७॥**

(अन्वयः) धरणिपतीनां योगाद्दशमाणसहितयोगयात्रा लग्नवशाद्दुष्टेपि- तिथ्यादौ सिद्धिर्वाञ्छितकार्यनिष्पत्तिः स्यात् एवं भूदेवानां ब्राह्मणानामृक्ष गुणैरपिसिद्धिः स्यात्, चौराणां शुभ शकुनैर्वा मनुजानामितरमनुष्याणां मुहूर्तादपि सिद्धिर्भवति ॥ ५७ ॥

अर्थ-राजाओंको योगसे सिद्धि प्राप्त होनी है और ब्राह्मणोंको नक्षत्र बलसे चौरों को शुभ शकुनसे सामान्य मनुष्योंको मुहूर्त्त बनने से सिद्धि मिलती है॥५७॥

योगयात्रा विषे लग्न शुद्धि—

**सहजे रविर्दशमभे शशी तथा शनिमंगलौ रिपुगृहे सितः सुते ।**

हिबुके बुधोगुरुरपीह लग्नगःसजयत्यरीन्प्रचलितोऽचिरान्नृपः५८

(अन्वयः) रविः सहजे तृतीये स्थाने स्यात् तथा शशिः चन्द्रो दशम भे दशमस्थाने, शनिमंगलौ रिपुगृहे षष्ठस्थाने स्याताम्, सितः शुक्रः सुते पंचमस्थाने, बुधोहिबुके चतुर्थस्थाने, गुरुर्लग्नगश्चेत्स्यादपि इदैवंविधयोगे यात्रा लग्ने स नृपो राजा प्रचलितः गच्छन् सन्नचिरात् स्वल्पकाले नैवारीन् शत्रून् जयति वशीकरोतीति ॥ ५८ ॥

अर्थः-सूर्य तीसरे, चन्द्रमा दशवें, शनि मंगल छठें, शुक्र पांचवें बुध चौथे, बृहस्पति लग्नमें हो तो ऐसे योगमें राजा निज शत्रुको जीत करके अतिशीघ्र लौटकर आता है ॥ ५८ ॥

दूसरा योग---

भ्रातरि सौरिर्भूमिसुतो वैरिणि लग्ने देवगुरुः ।
आयगतेऽर्के शत्रुजयश्चेदनुकूलो दैत्यगुरुः ॥ ५९ ॥

(अन्वयः) भ्रातरि तृतीयस्थाने सौरिः शनिः स्यात् वैरिणि षष्ठे भूमिसुतो मंगलः, लग्ने देवगुरुः अर्के रविरायगते लाभस्थानस्थिते, एवं विधयोगे राज्ञः शत्रुजयो चेद्दैत्यगुरुर्भवेत् शुक्रोनुकूलस्तदा ॥ ५९ ॥

अर्थः-यदि यात्रा लग्नसे शनिश्चर तीसरे घरमें होवै और छठे स्थानमें मंगल होय । बृहस्पति लग्नमें, सूर्य ग्यारहवें होवै और शुक्र अनुकूल (पीछे) होवै तो यात्रा करनेवाले राजाओंको जय मिलती है ॥ ५९ ॥

तनौ जीव इन्दुर्मृतो वैरिगोऽर्कः ।
प्रयातो महींद्रो जयत्येव शत्रून् ॥ ६० ॥

(अन्वयः) तनौ लग्ने जीवो गुरुः स्यात् मृतावष्टमस्थाने इन्दुश्चन्द्रः स्यात्, वैरिगः षष्ठस्थानगतोऽर्कश्चेत्स्यादेवंविधे योगे प्रयातो महीन्द्रो राजा शत्रून् जयत्येव ॥ ६० ॥

अर्थः-बृहस्पति लग्नमें, सूर्य छठें, चन्द्रमा आठवें, हो ऐसे योगमें राजा शत्रु पर चढ़ाई करै तो विजयलक्ष्मी ॥ ६० ॥

राजविजयसंज्ञकयोग-

लग्नगतः स्याद्देवपुरोधाः। लाभधनस्थैः शेषनभोगैः ॥ ६१ ॥

( अन्वयः ) देवपुरोधाः बृहस्पति र्लग्नगतः स्यात् शेषनभोगैरन्यैर्ग्रहैः लाभधनस्थैरेकादश द्वितीयस्थानस्थैश्चेत्तदेवं विधेयोगे राज्ञो विजयः स्यात् ॥ ६१ ॥

अर्थः—लग्न में बृहस्पति होवे और बाकी ग्रह ग्यारहवें और दूसरे स्थान में हों तो राजा अवश्य दिग्विजय करे ॥ ६१ ॥

ऐसे योग में राजा जयशाली होता है—

द्यूने चंद्रे समुदयगेऽर्के जीवे शुक्रे विदि धनसंस्थे।
ईदृग्योगे चलति नरेशो जेता शत्रून् गरुड इवाहीन् ॥६२॥

( अन्वयः ) चन्द्रे द्यूने सप्तमस्थाने सति अर्के समुदयगे सति जीवशुक्रे विदि बुधे एषु त्रिषु ग्रहेषु धनसंस्थेषु द्वितीयस्थानस्थेषु सत्सु, ईदृग्योगे एवं विधेयोगे नरेशश्चलति तदा शत्रून् जेता जेष्यति अहीन्सर्पान् गरुड इव यथा जयति ॥ ६२ ॥

अर्थः-सप्तम स्थानमें चन्द्रमा होय और सूर्य लग्नमें बृहस्पति शुक्र बुध ये ग्रह दूसरे स्थानमें हों तो जैसे सर्पोंको गरुड इस प्रकार राजा शत्रु दलको विजय करै॥६२॥

दूसरे योगमें शत्रु शलभ सरीखे होते हैं—

वित्तगतः शशिपुत्रो भ्रातरि वासरनाथः।
लग्नगते भृगुपुत्रे स्युः शलभा इव सर्वे ॥ ६३ ॥

( अन्वयः ) शशिपुत्रो बुधो वित्तगतः द्वितीयस्थः वासरनाथः सूर्यो भ्रातरि तृतीयस्थः भृगुपुत्रे शुक्रे लग्नगते सति, एवं विधेयोगे चेद्राजा चलति तदा सर्वे शत्रवः शलभा इव स्युः, यथा शलभा अग्नौ स्वयमेव गत्वा पतन्ति तथा शत्रवोपि पतन्ति ॥ ६३ ॥

अर्थः-बुध दूसरे, सूर्य तीसरे, शुक्र लग्न में होवे और राजा यात्रा करै तो राजा के प्रताप शत्रुदल अग्नि में पतगों की भांति भस्म हो जावै ॥ ६३ ॥

इस योगमें शत्रु सेना वश होती है—

उदये रविर्यदि सौरिररिगः शशी दशमेऽपि।
वसुधापतिर्यदि याति रिपुवाहिनी वशमेति ॥ ६४ ॥

( अन्वयः ) यदि उदये लग्ने रविः स्यात् सौरिः शनिः अरिः षष्ठस्थः स्यात् शशी चन्द्रः दशमस्थः स्यात्तदा ईदृशयोगे यदि वसुधापतिः राजा याति तर्हि रिपुवाहिनी शत्रुसेना वशमेतीति ॥ ६४ ॥

अर्थः--सूर्य लग्नमें, शनिश्चर छठे, चन्द्रमा दशवें, स्थानमें हो तो यात्री राजाके वशमें शत्रु सेना हो जावै ॥ ६४ ॥

दूसरे दो योग--

**तनौ शनिकुजौ रविर्दशमभे बुधो भृगुसुतोऽपि लाभदशमे ।**
**त्रिलाभरिपुषु भूसुतशनी गुरुज्ञभृगुजास्तथा बलयुताः ॥६५॥**

( अन्वयः ) तनौ लग्नस्थौ शनिमंगलौ यथा संभवं स्यातां रविर्दशमभे स्यात्, बुधो लाभे दशमे वा स्यात् भृगुसुतो वापि लाभे दशमे वा स्यात् तदैवं विधे योगे प्रचलितस्य राज्ञो जयः स्यात्, त्रिलाभरिपुभेषु भूसुतशनी मंगलशनैश्चरौ यदि स्यातां यस्मिन् कस्मिंश्चित्स्थाने स्थिता गुरुज्ञभृगुजा बलयुताः स्युस्तदैवं विधे योगे तथा राज्ञो विजय इति ॥ ६५ ॥

अर्थः-(१) शनि और मंगल लग्नमें हों, सूर्य दशवें हो बुध दशवें या ग्यारहवें हो अथवा शुक्र दशवें या ग्यारहवें हो तो ऐसे योग में यात्रा करने वाले राजा को जय होती है (२) मंगल और शनि तीसरा, छठवां, ग्यारहवाँ इनमें से किसी स्थान में हों और बुध, गुरु, शुक्र ये जहाँ कहीं बलवान् होकर पड़े हों तौ भी राजा का विजय होती है ॥ ६५ ॥

दूसरा योग और त्वरितागति—

**समुदयगे विबुधगुरौ मदनगते हिमकिरणे ।**
**हिबुकगतौ बुधभृगुजौ सहजगताः खलखचराः ॥६६॥**

( अन्वयः ) समुदयगे लग्नस्थे विबुधगुरौ सति हिमकिरणे चन्द्रे मदनगते सप्तमस्थे, सति, हिबुकं चतुर्थस्थानं तत्रगतौ बुधभृगुजौ स्यातां खलखचरे पापग्रहे सहजं तृतीयस्थानं तत्रगते च सति एवंविधे योगे वसुधापति यदि याति रिपुवाहिनी तदा वशमेतीति ॥ ६६ ॥

अर्थः-बृहस्पति लग्न में हों, सातवें चन्द्रमा, चौथे बुध और शुक्र होवें और पापग्रह तीसरे स्थान में होवें तो ऐसे योग में यदि राजा यात्रा करे तो शत्रु की सेना को वश में करै ॥ ६६ ॥

राजविजयाख्य दूसरा योग-

**त्रिदशगुरुस्तनुगो मदने हिमकिरणो रविरायगतः।**
**सितशशिजावपि कर्मगतौ रविसुतभूमिसुतौ सहजे ॥९७॥**

(अन्वय.) त्रिदशगुरुः बृहस्पतिर्लग्नगः स्यात् हिमकिरणश्चन्द्रः मदने सप्तमे स्यात् सितशशिजौ शुक्रबुधावपि कर्मगतौ दशमगतौ स्यातां रविः सूर्य आयगतः एकादशस्थ. स्यात् रविसुतभूमिसुतौ शनिमंगलौ सहजे स्यातां एवं-विधे योगे राज्ञो विजय एवेति ॥ ९७ ॥

अर्थः—बृहस्पति लग्न में हो चन्द्रमा सातवें, सूर्य ग्यारहवें, शुक्र बुध दशवें, शनि मंगल तीसरे. ऐसे योग में राजा यात्रा करै तो जय मिलै ॥ ९७ ॥

**देवगुरौ वा शशिनि तनुस्थे वासरनाथे रिपुभवनस्थे।**
**पंचमगेहे हिमकरपुत्रः कर्मणि सौरिः सुहृदि सितश्च ॥९८॥**

(अन्वयः) देवगुरौ शशिनि चन्द्रे वा तनुस्थे लग्नस्थे सति, वासरनाथे सूर्ये रिपु भवनस्थे षष्ठस्थे हिमकरपुत्रः बुधश्च पञ्चमगेहे सौरिः शनिः कर्मणि दशमे स्यात्, सितः शुक्रः सुहृदि चतुर्थस्थाने स्यात् एवंविधे योगे राज्ञो विजय एवेति ॥ ९८ ॥

अर्थः-बृहस्पति अथवा चन्द्रमा लग्न में, सूर्य छठे, बुध पांचवें, शनि दशवें, शुक्र चौथे हों और राजा शत्रु पर चढ़ाई करै तो विजय होवै ॥ ९८ ॥

**हिमकिरणसुतो बली चेत्तनौ त्रिदशपतिगुरुर्हि केंद्रस्थितः।**
**व्ययगृहसहजारिधर्मस्थितो यदि च भवति निर्बलश्चंद्रमाः ९९**

(अन्वयः) हिमकिरणसुतो बुधो बली सन् चेत्तनौ लग्ने स्यात् हि निश्चयेन त्रिदशपतिगुरुर्बृहस्पतिश्चेत्केन्द्रस्थितः यदि च निर्बलः बलरहितः सन् चन्द्रो व्ययगृहसहजारिधर्मस्थिते भवति तदैवं विधे योगे राज्ञो विजय एव स्यादिति ॥ ९९ ॥

अर्थः-जिस यात्रा लग्न में बली बुध होवै, बृहस्पति केन्द्र में और निर्बल चन्द्रमा बारहवें तीसरे छठे नव स्थानों में से किसी स्थान में हो और राजा यात्रा करै तो विजयलक्ष्मी प्राप्त होवै ॥ ९९ ॥

द्रव्यसमूहलाभकारक दूसरा योग—

अशुभखगैरनवाष्टमदस्थैर्हिबुकसहोदरलाभगृहस्थः ।
कविरिह केंद्रगगीष्पतिदृष्टो वसुचयलाभकरः खलु योगः ७०

( अन्वयः ) अशुभखगै. पापग्रहैर्हिं निश्चितं नवाष्टमदस्थैः सद्भिर्यदि कविः शुक्रः हिबुकसहोदरलाभगृहस्थः चतुर्थतृतीयैकादशस्थानस्थितः सन् केन्द्रस्थितो यो गीष्पतिर्गुरुस्तेन दृष्टो भवेत् एवं विधो योगो वसुचयो द्रव्यसमूहस्तस्य लाभकरः स्यात् खलु एवं राज्ञो विजयोपि स्यादिति ॥ ७० ॥

अर्थः—पापग्रह नवमें, आठवें, सातवें, स्थानोंको छोड़कर और स्थानों में होवें, शुक्र चौथे तीसरे ग्यारहवें होवै केन्द्रमें स्थित बृहस्पति पर शुक्रकी दृष्टि हो ऐसे योगमें राजा चलै तो राजाको खजाना मिलै ॥ ७० ॥

राजा के विजय का दूसरा योग—

रिपुलग्नकर्महिबुके शशिजे परिवीक्षिते शुभनभोगमनैः ।
व्ययलग्नमन्मथगृहेषु जयः परिवर्जितेष्वशुभनामधरैः ॥७१॥

( अन्वयः ) रिपुलग्नकर्म हिबुके शशिजे बुधे शुभनभोगमनैः शुभग्रहैश्चन्द्र गुरुशुक्रैः परिवीक्षिते दृष्टे सति, व्ययलग्नमन्मथगृहेषु परिवर्जितेषु रहितेष्व शुभनामधरैः पापग्रहैश्चेत्तदैवं विधे विशिष्टे योगे राज्ञो जय एव स्यादिति ॥

अर्थः—बुध छठें, दशवें, चौथे, लग्न इनमेंसे किसी स्थानमें होवे और शुभग्रहकी दृष्टिहोवै । पापग्रह बारहवाँ, लग्न और सातवाँ स्थानको छोड़कर अन्यस्थानोंमें स्थित होवें, यदि ऐसे योगमें राजा यात्रा करै तो विजय होवै । लक्ष्मी प्राप्त करै ॥ ७१ ॥

राज्य प्राप्ति का योगः—

लग्ने यदि जीवः पापा यदि लाभे
कर्मण्यपि वा चेद्राज्याधिगमः स्यात् ।
धने बुधशुक्रौ चंद्रो हिबुके वा
तद्वत्फलमुक्तं सर्वैर्मुनिवर्यैः ॥ ७२ ॥

( अन्वयः ) लग्ने जीवो गुरुर्यदि स्यात्, अथवा लाभे एकादशस्थाने कर्मणि दशमस्थानेऽपि पापग्रहाश्चेत्स्युस्तदा राज्याधिगमः राज्यप्राप्तिर्भवेत्, अथवा

द्यूने सप्तमे बुधशुक्रौ स्यातां चन्द्रश्च हिबुके चतुर्थस्थाने स्यादेवं विधे योगे सर्वैं मुनिवर्यैस्तत्फलमुक्तं राज्यादिगमः स्यात् ॥ ७२ ॥

अर्थः-बृहस्पति लग्नमें, पापग्रह ग्यारहवें, दशवें हों ऐसे योगमें राजा चले तो राज्य प्राप्ति करै। बुध शुक्र सातवें और चन्द्रमा चौथे हों यदि ऐसे योग में राजा चले तो भी आचार्यों का मत है कि राज्य प्राप्त होवै ॥ ७२ ॥

**रिपुतनुनिधने शुक्रजीवेंदवो ह्यथ बुधभृगुजौ तुर्यगेहस्थितौ।**
**मदनभवनगश्चंद्रमा वांबुगःशशिसुतभृगुजांतर्गतश्चंद्रमा।७३।**

(अन्वयः) रिपौ षष्ठे शुक्रः तनौ जीवः निधने अष्टमे इन्दुश्चन्द्रः एतादृशे योगे राज्ञो विजयः स्यादिति. (१) अथ बुधभृगुजौ तुर्यगेहचतुर्थस्थानं तत्र स्थितौ चेत्स्यातां चन्द्रमा मदनभवनगः सप्तमस्थानस्थितश्चेत्स्यात्तदेवं विधे योगे राज्ञो विजयः स्यादिति (२) अथवा चन्द्रमा अंबुगश्चतुर्थः सन् शशिसुत भृगुजयोर्बुधशुक्रयोरन्तगति मध्यवर्ती स्यात् (३) एतादृशे योगे गन्तू राज्ञो विजय एवेति ॥ ७३ ॥

अर्थः—यदि यात्रा लग्नसे छठें घरमें शुक्र और लग्नमें, बृहस्पति, चन्द्रमा आठवें हों तो ऐसे योगमें यात्रा करनेसे जय होवै। बुध शुक्र चौथे, चन्द्रमा सातवें हों तो भी राजाकी जय हो। अथवा चन्द्रमा चौथे, बुध शुक्रके बीच में होवै तो भी राजाकी जय होवै ॥ ७३ ॥

दूसरा राजविजय योग—

**सितजीवभौमबुधभानुतनूजास्तनुमन्मथारिहिबुकत्रिगृहे चेत्।**
**क्रमतोऽरिसोदरखगात्रयहोरा हिबुकायगैर्गुरुदिनेऽखिलखेटैः७४**

(अन्वयः) सितजीवभौमबुधभानुतनुजाः क्रमेण तनुमन्मथारिहिबुकत्रिगृहे चेत्तदेवं विधे योगे विजयः स्यादेव, गुरुदिने बृहस्पतिवासरे अखिलखेटैः समस्तग्रहैः सूर्यादिभिः सप्तभिः क्रमतोऽरिसोदरखगात्रयहोरा हिबुकायगैश्चेत्तदैतादृशे योगे राज्ञो विजयः स्यादित्यर्थः ॥ ७४ ॥

अर्थः—लग्न में शुक्र हो, सातवें बृहस्पति, छठे मंगल, चौथे बुध, तीसरे शनै श्चर ऐसे योग में यदि राजा यात्रा करै तो जय को प्राप्त होवै। बृहस्पति वारहवें छठे सूर्य, तीसरे चन्द्रमा, दशवें मंगल, छठे बुध, लग्न में बृहस्पति, चौथे शुक्र, ग्यारहवें शनैश्चर होवैं और राजा यात्रा करै तो विजय होवै ॥ ७४ ॥

दूसरे दो दो योग-

सहजे कुजो निधनगश्च भार्गवो
मदने बुधो रविररौ तनौ गुरुः ।
अथ चेत्स्युरीज्यसितभानवो जल-
त्रिगता हि सौरिरुधिरौ रिपुस्थितौ ॥ ७५ ॥

( अन्वयः ) अथ सहजे तृतीये कुजो मङ्गलः स्यात् निधनगः अष्टमे भार्गवः शुक्रो मदने सप्तमे बुधः अरौ षष्ठे रविः सूर्यः तनौ लग्ने गुरुः ऐतादृशे योगे गन्तू राज्ञो विजय एव, ईज्यसितभानवो बृहस्पतिशुक्रसूर्याः जलत्रिगताश्चतुर्थ तृतीयस्थानगताश्चेत्स्यु सौरिरूधिरौ शनिमङ्गलौ रिपुस्थितौ भवेतां एवं विधे योगे हि निश्चतं राज्ञो विजयः स्यादिति ॥ ७५ ॥

अर्थः-तीसरे मंगल, आठवें शुक्र, सातवें बुध, छठे सूर्य, लग्नमें बृहस्पति हों ऐसे योगमें राजाकी जय होवै । गुरु शुक्र सूर्य चौथे तीसरे स्थानमें होवें, शनि मंगल छठे स्थानमें हो ऐसे योगमें राजा चले तो अवश्य जयको प्राप्त होवै ॥७५॥

नामविशेषपुरस्कारसे तीन योग फल सहित—

एको ज्ञेज्यसितेषु पंचमतपःकेंद्रेषु योगस्तथा
द्वौ चेत्तेष्वधियोग एषु सकला योगाधियोगः स्मृतः
योगे क्षेममथाधियोगगमने क्षेमं रिपूणां वधं ।
चाथो क्षेमयशोवनीश्च लभते योगाधियोगे व्रजन्॥७६॥

( अन्वय )—ज्ञेज्यसितेषु बुध बृहस्पति शुक्रेषु एकोऽपि यथा-बुधो वा गुरु र्वा शुक्रो वा चेत्पंचमतपःकेन्द्रेषु स्यात् तदा योगाख्यो योगः, तथा तेषु ज्ञेज्य शुक्रेषु द्वौ बुध गुरू बुधशुक्रौ वा एषु पंचमतपःकेन्द्रेषु तदा अधियोगः, तथा तेषु ज्ञेज्यशुक्रेषु सकलाः सर्वेऽपिचेत्पंचमतपः केन्द्राणामन्यतमस्थानभेदेन स्थानैक्ये न वा स्थिताश्चेत्स्युः तदा योगाधियोगाख्यो योगः, अथ योगे व्रजन् गच्छन्राजा क्षेमं कुशलं लभते, अधियोगे राजा व्रजन् क्षेमं कुशलं तथा रिपूणां शत्रूणां वध च लभते, योगाधियोगे व्रजन् राजा क्षेमयशोऽवनीः लभते ॥ ७६ ॥

अर्थः—बुध बृहस्पति शुक्र इन तीनोंमें से एक ग्रह पंचम स्थान नाम स्थान और केन्द्रमें हो तो योगाख्य योग कहना, इसमें राजा चले तो आने जाने में कुशल रहे। यदि दो ग्रह उक्त स्थानों में हो तो अधियोगाख्य योग कहना इसमें राजा यात्रा करे तो कुशल से रहे और शत्रु को मारे यह फल होवे तीनों ग्रह उक्त स्थानोंमें होवें तो योगाधियोग होता है इस योग में राजा शत्रु पर चढ़ाई करे तो कुशल, यश, पृथ्वी, शत्रु का वध इतने फलों को प्राप्त होवे ॥७६॥

विजयादशमीसंज्ञक योग—

इषमासि सिता दशमी विजया शुभकर्मसु सिद्धिकरी कथिता
श्रवणर्क्षयुता सुतरां शुभदा नृपतेस्तु गमे जयसंधिकरी ।७७

(अन्वयः) सिता शुक्लादशमी इषमासि आश्विने विजयाभिधा तत्र शुभकर्मसु सिद्धिकरी कथिता, श्रवणर्क्षयुता सा विजया सुतरां नितरां नृपतेः गमे गमने चेत्तदा जयसन्धिकरी कथिता ॥ ७७ ॥

अर्थः—आश्विन शुक्लपक्ष दशमीको विजय नाम दशमी होती है सो सम्पूर्ण कामों में सिद्धि करनेवाली होती है यदि श्रवण नक्षत्रसे युक्त होतो बहुतही शुभप्रद होती है इसमें राजा दूसरे राज्य पर चढ़ाई करे तो विजय होवे अथवा संधि (मिलाप) होवे ॥ ७७ ॥

दूसरे अंतःकरण विशुद्धि आदि योग—

चेतोनिमित्तशकुनैः खलु सुप्रशस्तै-
र्ज्ञात्वा विलग्नबलमुर्व्यधिपः प्रयाति ।
सिद्धिर्भवेदथ पुनः शकुनादितोऽपि
चेतोविशुद्धिरधिका न च तां विनेयात् ॥ ७८ ॥

(अन्वयः) अथ चेतोनिमित्तशकुनैः चेतोन्तःकरणम्, निमित्तं मङ्गलस्फुरणादि, शकुनानि पक्षिप्रमाणानि, एतैःखलु अतिसुप्रशस्तैः सद्भिः तथा विलग्नबलमपि ज्ञात्वा उर्व्यधिपो राजा प्रयाति गच्छति तदा सिद्धिर्भवेत्, पुनरपि शकुनादितः सकाशात् चेतो विशुद्धिरधिका तां चेतो विशुद्धिं विना नेयात् न गच्छेत् ॥ ७८ ॥

अर्थः-अंतःकरण शुद्ध, अंगोंका फरकना, शुभ शकुन, यह सब अच्छे होवें और लग्न बली होवै तो राजा मनोवाञ्छित फलको प्राप्त करै और लग्न शुद्ध हो शकुन अच्छा न होवै तो यात्रा न करै यदि शकुन अच्छे हों लग्न शुद्ध हो और चित्त प्रसन्न न होवै तो कदापि यात्रा न करै ॥ ७८ ॥

यात्रामें निषिद्ध निमित्त-

**व्रतबंधनदेवताप्रतिष्ठाकरपीडोत्सवसूतकासमाप्तौ ।**
**न कदापि चलेदकालविद्युद्घनवर्षातुहिनेऽपिसप्तरात्रम् ॥७९**

( अन्वयः )-व्रतबन्धनं यज्ञोपवीतम्, देवता प्रतिष्ठा प्रसिद्धा, करपीड़ा विवाहः, उत्सवो होलिकादिः, सूतकं द्विविधं-जननसूतकं मरणसूतकंच, एतेषां समाप्तौ समाप्तिं विना कदापि नैव चलेद्गच्छेत् ॥ विद्युत प्रसिद्धा, घनो घनग र्जितम्, वर्षा वृष्टिः, तुहिनं तुषारः, सप्तरात्रं दिवससप्तकं न चलेत् इति ॥ ७९ ॥

अर्थ-यज्ञोपवीत देवता ओंकी प्रतिष्ठ, विवाह, उत्सव, जनन और मृत अशौच इनके समाप्त होनेके प्रथम यात्रा न करनी चाहिये, बिना समय बिजली और मेघगर्जना मेघवर्षना, बर्फपड़ना, इनके होनेसे सातदिन पर्यन्त कभी भी यात्रा नहीं करनी चाहिये ऐसे समयमें यात्रा शुभ नहीं होती ॥ ७९ ॥

एकदिनसाध्य गमन प्रवेशमें विशेष-

**महीपतेरेकदिने पुरात्पुरे यदा भवेतां गमनप्रवेशकौ ।**
**भवारशूलप्रतिशुक्रयोगिनीर्विचारयेन्नैव कदापि पंडितः ॥८०॥**

( अन्वयः )-महीपते राज्ञो यदा पुरात्पुरे एक दिने एव गमनप्रवेशकौ भवेतां स्याताम् यस्मिन्नेव दिने एकस्मात्पुराद्गमनं तस्मिन् दिने एव च नगरान्तरे प्रवेशः । तत्र तथा कथंचित्तंचाङ्गशुद्धिमालोच्य, भवारशूलप्रतिशुक्रयोगिन्यश्च एतान् दोषान् पंडितः कदापि नैव विचारयेत् ॥ ८० ॥

अर्थ-यदि एकही दिनमें एक नगर से दूसरे नगरमें यात्रा और प्रवेश होवै तो पंडितजन नक्षत्र वार दिक्शूल सन्मुख शुक्र योगिनी आदिका विचार न करें ॥ ८० ॥

एक दिनसाध्य गमनप्रवेश करने होवें तो विचार—

**यद्येकस्मिन् दिवसे महीपतेर्निर्गमप्रवेशौ स्तः ।**

तर्हि विचार्यः सुधिया प्रवेशकालो न यात्रिकस्तत्र ॥ ८१ ॥

(अन्वयः) महीपते राज्ञः यदि एकस्मिन्दिवसे निर्गमप्रवेशौ स्तः तर्हि सुधिया तत्र प्रवेशकालो यात्रिकः गमनशीलः न ।विचार्यः ॥ ८१ ॥

अर्थः-यदि एकही दिन आना और जाना होय तो प्रवेशकाल विचार योग्य है जानेके समय का न विचार करै ॥ ८१ ॥

प्रायशः नवमीका निषेध—

प्रवेशान्निर्गमं तस्मात्प्रवेशं नवमे तिथौ ।
नक्षत्रे च तथा वारे नैव कुर्यात्कदाचन ॥८२॥

(अन्वयः) प्रवेशात् गृहप्रवेशतिथितोनवमे तिथौ निर्गमं गमनं न कुर्यात् एवं तस्मात् गमनदिवसान्नवमतिथौ गृहप्रवेशं न कुर्यात् । यस्मिन्नक्षत्रे गृहप्रवेशः कृतस्ततो नवमे नक्षत्रे प्रयाणं न कार्यम् । यथा-मृगे प्रवेशो हस्ते गमनम् । एवं वारेपि विचार्य्यम् । यथा बुधवारे प्रवेशस्ततो नवमे दिवसे गुर्वाख्ये कदाचन प्रयाणं नैव कुर्यात् ॥ ८२ ॥

अर्थ-प्रवेश के तिथि नक्षत्र वार इन्हीं नवम तिथि नक्षत्र वारोंमें गमन नहीं करै और गमन दिन से नवें तिथि नक्षत्र वारों में प्रवेश न करै ॥ ८२ ॥

यात्रा करने के दिन विधि—

अग्निं हुत्वा देवतां पूजयित्वा
नत्वा विप्रानर्चयित्वा दिगीशम् ।
दत्त्वा दानं ब्राह्मणेभ्यो दिगीशं
ध्यात्वा चित्ते भूमिपालोऽधिगच्छेत् ॥ ८३ ॥

(अन्वयः)-गमनसमये अग्निं हुत्वा हवनं कृत्वा देवतां पूजयित्वा, विप्रान् नत्वा, दिगीशमर्चयित्वा, ब्राह्मणेभ्यो दानं दत्वा, चित्ते अन्तः करणे दिगीशं ध्यात्वा भूमिपालः अधिगच्छेत्, ॥ ८३ ॥

अर्थः-राजा अग्निमें हवन करके देवताओं का पूजन करके ब्राह्मणों को नमस्कार करके और दिशाके स्वामीको पूजा करके ब्राह्मणोंको दान देकर दिग्स्वामीकाहृदय में ध्यान करके यात्रा करै ॥ ८३ ॥

नक्षत्रोंके दोहद ( ईप्सित अर्थ )--

कुल्माषांस्तिलतंडुलानपि तथा माषांश्च गव्यं दधि
त्वाज्यं दुग्धमथैणमांसमपरं तस्यैव रक्तं तथा।
तद्वत्पायसमेव चाषपललं मार्गं च शाशं तथा।
षाष्ठिक्यं च प्रियंग्वपूपमथवा चित्रांडजान् सत्फलम्॥८४॥
कौर्मं सारिकगौधिकं च पललं शाल्यं हविष्यं हया-
दृक्षे स्यात्कृसरान्नमुद्गमपि वा पिष्टं यवानां तथा।
मत्स्यान्नं खलु चित्रितान्नमथवा दध्यन्नमेवं क्रमा-
द्भक्ष्याभक्ष्यमिदं विचार्य मतिमान् भक्षेत्तथालोकयेत्॥८५॥

( अन्वयः ) गमनसमये अश्विन्यादिः सप्तविंशतिभेषु नक्षत्रदोहदम्। कुल्मा षांस्तिलतण्डुलानपि तथा माषांश्चेत्यादिक मिदमेवं क्रमात् भक्ष्याभक्ष्यं मतिमान् विचार्य भक्षयेत् तथा आलोकयेत्पश्येदित्यर्थः॥ ८४॥ ८५॥

अर्थः-अश्विन्यादि नक्षत्रोंमें निम्न लिखित पदार्थों का भक्ष्य समझे तो भक्षण करै नहीं तो स्पर्शकर लेवे यदि स्पर्श करना योग्य न समझे तो दृष्टि से यात्रा समय में देखलेवे। पाकला (खड़े भीगे उड़द) १ तिल २ चावल ३ उड़द ४ गौका दही ५ गौ का घृत ६ गौका दूध ७ हरिणमांस ८ मृग रक्त ९ खीर १० चषया का मांस ११ मृग मांस १२ खरहा का मांस १३ साठीका चावल १४ प्रियंगु १५ पूडा १६ अनेक वर्णका पक्षी १७ उत्तम फल॥ ८४॥

ज्येष्ठा आदि नक्षत्रके दोहद --

अर्थः--१८ कछुआका मांस १९ मैनाका मांस २० गोहका मांस २१ शल (सेह) का मांस २२ मूँग २३ खिचड़ी २४ मूँगचावल २५ जवका सत्तू २६ मछली का मांस २७ अनेकवर्ण का चावल २८ दही भात ये भक्ष्याभक्ष्य अश्विनी आदि नक्षत्रोंमें क्रमसे उक्त क्रिया कर इससे दुष्ट नक्षत्र दोष दूर होता है॥८५॥

दिशाओं के दोहद--

आज्यं तिलौदनं मत्स्यं पयश्चापि यथाक्रमम्।

भक्षयेद्दोहदं दिश्यमाशां पूर्वादिकां व्रजेत् ॥ ८६ ॥

(अन्वयः) आज्यं घृतं पूर्वस्यां, तिलौदनं दक्षिणस्यां, मत्स्यं प्रसिद्धं पश्चिमायां, पयो दुग्धमुत्तरस्याम्, एतदपि यथाक्रमं दिश्यमभीष्टदिग्भवं दोहदं भक्षयेत् ततः पूर्वादिकां आशां दिशं व्रजेत् गच्छेत् ॥८६॥

अर्थः-पूर्व के गमन में घृत भोजन करै दक्षिण के गमन में तिल चावल, पश्चिम के गमन में मच्छी (मछली) उत्तर के गमन में दूध भक्षण करके यात्रा करै तो शुभ है ॥ ८६ ॥

सूर्य आदि वारों के दोहद-

रसालां पायसं कांजीं शृतं दुग्धं तथा दधि ।
पयोऽशृतं तिलान्नं च भक्षयेद्वारदोहदम् ॥ ८७ ॥

(अन्वयः) यथा रसला शर्करादधिमरीचकर्पूरैलासंसृष्टा लोके शिखरिणीति प्रसिद्धा, तां रविवारे । पायसकांज्यौ चन्द्रमंगल वारयोः । शृतं पक्वं दुग्धं बुधवारे । दधि गुरुवारे । पयोऽशृतं अशृतमपक्वं दुग्धं शुक्रवासरे । तिलान्नं तिलमिश्रमोदनं शनौ तथा चैतद्वारदोहदं रविवारादौ क्रमेण भक्षयेत् ततः गमनं व्रजेत् ॥ ८७ ॥

अर्थः-सिखरण १ खीर २ काजी ३ पका दूध ४ दही ५ बिना पका दूध ६ तिल मिला चावल ७ ये वस्तुक्रम से रतवार आदि सात वारोंमें भक्षण करै तो दुष्टवार दोष दूर हो जावै ॥ ८७ ॥

प्रतिपदा आदि तिथियोंके दोहद—

पक्षादितोऽर्कदलतंडुलवारि सर्पिः-
श्राणा हविष्यमपि हेमजलं त्वपूपम् ।
भुक्त्वा व्रजेद्रुचकमंबु च धेनुमूत्रं
यावान्नपायसगुडानसृगन्नमुद्गान् ॥ ८८ ॥

(अन्वयः) पक्षादितः प्रतिपदादि पञ्चदशतिथिषु क्रमेण अर्कदलतन्डुल वारिसर्पिःश्राणा हविष्यमपि हेमजलं त्वपूपं रुचकमम्बु च धेनुमूत्रं यवान्नपायस

गुडानसृगन्नमुद्गान् तिथिदोहदं भुक्त्वा भोजनं कृत्वा व्रजेत् गच्छेत्। पक्षयो-रुभयोरेवं यात्रायोगे विधिः कथितः इति ॥ ८८ ॥

अर्थः-आकके पत्ते १ प्रतिपदा को, तण्डुलजल २ को घृत ३ यवागू ४ को मूँग आदि ५ को सुवर्ण जल, ६ को मालपूवा ७ को विजोरा ८ को जल ६ को गोमूत्र १० को यवविकार ११ को खीर १२ को गुड़ १३ को रुधिर १४ को मूंग १५ को अमावास्या पूर्णिमा को ये उभय पक्ष तिथि दोहद दोषों के नाशके लिये भक्षण तथा स्पर्श तथा अवलोकन करै ॥ ८८ ॥

गमन समय में कर्तव्य विधि—

उद्धृत्य प्रथमत एव दक्षिणांघ्रिं
द्वात्रिंशत्पदमभिगत्य दिश्ययानम् ।
आरोहेत्तिलघृतहेमताम्रपात्रं
दत्वादौ गणकवराय च प्रगच्छेत् ॥ ८६ ॥

( अन्वयः ) राजागमनसमय एव प्रथमतो दक्षिणांघ्रिं दक्षिणचरणमुद्धृत्य पश्चात् द्वात्रिंशतं पदं द्वात्रिंशत्पदपरिमितां भूमिं अभिगत्य गत्वा दिश्ययानं वक्ष्यमाणं दिग्विशेषं हस्तादियानं आरोहेत। आरोहणसमये तिलघृतहेमताम्र पात्रं आदौ गणकवराय ज्यौतिर्विच्छ्रेष्ठाय चकारादन्येभ्योपि ब्राह्मणेभ्यो यथा शक्ति दानं दत्वा प्रगच्छेत् इति ॥ ८६ ॥

अर्थः-राजा प्रथम बत्तीसपद दक्षिण पग उठाकर चलै और दिशा विशेष सवारी पर चढ़ते वक्त तिल घृत सुवर्ण तांबा का पात्र ये ज्योतिषी को देकर-यात्रा करै ॥ ८६ ॥

कौनसी दिशा में कौन से वाहन से जाना—

प्राच्यां गच्छेद्गजेनैव दक्षिणस्यां रथेन हि ।
दिशि प्रतीच्यामश्वेन तथोदीच्यां नरैर्नृपः ॥६०॥

( अन्वयः ) यथा गमनसमये प्राच्यां पूर्वदिशायां गजेन, दक्षिणस्यां रथेन, प्रतीच्यां दिशि अश्वेन, तथा उदीच्यां उत्तरस्यां नरैर्नृयानैः नृपः गच्छेत् ॥ ६० ॥

अर्थः-हाथी की सवारी से पूर्वदिशा की यात्रा करै। रथ करके दक्षिण को, घोड़ा करके पश्चिम को, पालकी करके उत्तर को यात्रा श्रेष्ठ है ॥ ६० ॥

निर्गम के स्थान आदिका विस्तार—

**देवगृहाद्वा गुरुसदनाद्वा स्वगृहान्मुख्यकलत्रगृहाद्वा ।**
**प्राश्य हविष्यं विप्रानुमतः पश्यन् शृण्वन्मंगलमेयात् ॥९१॥**

( अन्वयः ) देवा विष्णवादयः पूज्यन्ते यस्मिन् गृहे तद्देवगृहं, गुरुरध्यापकः स्वस्य कुलगुरुर्वा, स्वगृहं स्वशयनागृहम्, बहुस्त्रीसत्वे मुख्यकलत्रं पट्टराज्ञी तद्गृहं एषां मध्ये मनोभीष्टात् स्थानात् भोजनसम्भवे हविष्यमन्नं प्राश्य भक्षयित्वा विप्रानुमतः कृतोत्सवः मंगलं मंगलद्रव्यं मनोभीष्टं पश्यन् सन् शृण्वन् सन् एयात् गच्छेदिति ॥ ९१ ॥

अर्थः-राजा गमन समय में देवस्थान से या गुरुस्थान से वा निज गृहसे वा पटरानी के स्थान से हविष्य भोजन करके ब्राह्मण की आज्ञा से मंगल वस्तु देखता हुआ और मंगल शब्द सुनता हुआ गमन करै ॥ ९१ ॥

प्रस्थान करना होवे तो क्रम से वस्तु—

**कार्याद्यैरिह गमनस्य चेद्विलंबो भूदेवादिभिरुपवीतमायुधं च ।**
**क्षौद्रं चामलफलमाशु चालनीयं सर्वेषां भवति यदेव हृत्प्रियं वा ॥९२॥**

( अन्वयः ) कार्याद्यैः इह किंचिदावश्यकं कार्यं ना भूदिति गमनस्य चेद्विलम्बः स्यात्तदा विचारिते यात्रालग्ने भूदेवादिभिर्ब्राह्मणप्रभृतिभिरेतानि वस्तूनि आशु चालनीयानि प्रस्थापनीयानि । यथा ब्राह्मणेनोपवीतम्, क्षत्रियेणायुधं, वैश्येन मधु, शूद्रेण आमलकफलं, नारिकेलादि । वा अथवा सर्वेषां वर्णानांयदेव हृत्प्रियं मनोभीष्टं तदेव भवति ॥ ९२ ॥

अर्थः—यदि यात्रा के मुहूर्त के दिन आवश्यकीय कार्य्यवश यात्रा न कर सके तो ब्राह्मण यज्ञोपवीत, क्षत्रिय शस्त्र, वैश्य शहद, शूद्र आँवला, ( नारियल फल ) अथवा जिसको जो पदार्थ प्रिय हो अथवा रोजगार विशेष से वस्तु प्रस्थान धरे ॥ ९२ ॥

प्राचीन आचार्यों के मत से प्रस्थान का परिमाण—

**गेहाद्गेहांतरमपि गमस्तर्हि यात्रेति गर्गः ।**
**सीम्नः सीमांतरमपि भृगुर्बाणविक्षेपमात्रम् ॥**

प्रस्थानं स्यादिति कथयतेऽथो भरद्वाज एवं ।
यात्रा कार्या बहिरिह पुरात्स्याद्वसिष्ठो ब्रवीति ॥९३॥

( अन्वयः ) गेहाद्गेहान्तरमपि स्वगृहात्परगृहमतिसमीपवर्त्यपि तत्रापि चेत् गमो गमनं स्यात्तर्हि यात्रा जातेति गर्गः कथयते । अथवा सीम्नः स्वग्रामसीमामुल्लंघ्य सीमान्तरं ग्रामान्तरसीमां प्राप्य वसेदिति भृगुः कथयते । अथ बाणविक्षेपमात्रं प्रस्थानं स्यादिति भरद्वाजः कथयते । अथवा इह पुरान्नगराद् बहिर्यात्रा कार्या स्यादित्येवं वसिष्ठो ब्रवीति ॥ ९३ ॥

अर्थः–गर्गाचार्य के मत से घर से दूसरे घर जाकर ठहरे उसको भी यात्रा कहते हैं । शुक्राचार्य के मत से सीमा से दूसरी सीमा में जाने को यात्रा कहते हैं और भरद्वाज एक बाण पहुँचने तक की दूर को यात्रा कहते हैं । वसिष्ठ जी नगर से बाहर जाने को यात्रा कहते हैं ॥ ९३ ॥

मुनियों के मत से प्रस्थान का प्रमाण–

प्रस्थामत्रधनुषां हि शतानि पञ्च
केचिच्छतद्वयमुशंति दशैव चान्ये ।
संप्रस्थितो य इह मंदिरतः प्रयातो
गंतव्यदिक्षु तदपि प्रयतेन कार्यम् ॥९४॥

( अन्वयः ) अत्र गमन समये ( १ ) तादृशानां धनुषां पञ्च शतानि शतद्वयं हस्तसहस्रद्वयमिति यावत् । स्वगृहात्तावद्धस्तावधि प्रस्थानं स्यादिति केचिदाहुः । अन्ये तु तादृशानां धनुषां शतद्वयं अष्टौ शतानि हस्ता,स्तावत्प्रस्थानमित्याहुः । अपरे तु इह यात्राकाले मन्दिरतः स्वगृहाद्दशैव धनूंषि चत्वारिंशद्धस्तास्तावद्दूरे संप्रस्थितः प्रयात एव तदपि प्रस्थानं प्रयतेन सविधानेन राजादिना गन्तव्यदिक्षु यस्यां दिशि गमनं चिकीर्षितं तद्दिगभिमुखं कार्यमिति ॥९४॥

अर्थः—कितने ऋषि तो पाँच सौ धनुष ( दो हजार हाथ ) प्रस्थान कहते हैं, कोई आठ सौ हाथ कहते हैं, कोई दश धनुष कहते हैं । चार हाथ का एक धनुष होता है सो प्रस्थान जिस दिशा में जाना होय उसी तरफ धरे ॥ ९४ ॥

---

( १ ) हस्तैश्चतुर्भिर्भवतीह दण्डमित्यादिना धनुषः प्रमाणम् ॥

राजा आदिके प्रस्थान में दिनों का प्रमाण-

प्रस्थाने भूमिपालो दशदिवसमभिव्याप्य नैकत्र तिष्ठेत्
सामंतः सप्तरात्रं तदितरमनुजः पञ्चरात्रं तथैव ।
ऊर्ध्वं गच्छेच्छुभाहेऽप्यथ गमनदिनात्सप्तरात्राणि पूर्वं
चाशक्तौ तद्दिनेऽसौ रिपुविजयमना मैथुनं नैव कुर्यात् ॥ ९५ ॥

( अन्वयः ) अथ भूमिपाल एकत्र प्रस्थाने दशदिवसमभिव्याप्य दशाहोरात्राणि न तिष्ठेत् न वशेदित्यर्थः । सामन्तो मांडलिकश्चतुर्द्धारिक एकत्र प्रस्थाने सप्तरात्रं न वशेत् । तदितरमनुजः ब्राह्मणादिः तथैव एकत्र प्रस्थाने पञ्चरात्रं न वशेत् । ऊर्ध्वं अवधि दिवसातिक्रमानन्तरं पुनर्गृहमागत्य शुभाहे पूर्वोक्त प्रकारेण विचारितशुभदिवसे गच्छेत् । अथ असौ राजादिः रिपुविजयमना शत्रुजये कृतांत करणः सन् गमनदिनात्पूर्वं सप्तरात्राणि मैथुनं नैव कुर्यात् । अशक्तौ च तद्दिनेऽपि मैथुनं स्त्री गमनं नैवकुर्यात् ॥ ९५ ॥

अर्थः-राजा प्रस्थान में दशदिन नहीं ठहरे माण्डलिक राजा सात रात्रि न ठहरे और मनुष्य पांच रात्रि न रहे यदि रह भी जावै तो घर आकर दूसरा मुहूर्त शुभ दिन में करे महाराजा शत्रुजीतने की इच्छा वाला यात्रा दिनसे सात दिन प्रथम मैथुन न करे और यदि ऐसा न कर सके तो एक रात्रि अवश्य मैथुन न करे ॥ ९५ ॥

प्रस्थान में त्याज्य वस्तु—

दुग्धं त्याज्यं पूर्वमेव त्रिरात्रं क्षौरं त्याज्यं पंचरात्रं च पूर्वम् ।
क्षौद्रं तैलं वासरेऽस्मिन्वमिश्च त्याज्यं यत्नाद्भूमिपालेन नूनम् ॥ ९६ ॥

( अन्वयः ) यात्रादिनात्पूर्वं भूमिपालेन यत्नात् त्रिरात्रंदुग्धं त्यज्यम् । एवंच पंचरात्रं पूर्वं क्षौरं क्षौर सबन्धि मुंडनं श्मश्रु कर्म च त्याज्यम् । अस्मिन्वासरे यात्रा दिने क्षौद्रं मधुभक्षणेन तैलं तैललेपनं त्याज्यम् । वमिश्च वमनं चकारदेव शरीरशोधनार्थं बलात्कारकृताऽवा यात्रा दिनेपि निषिद्धा नूनं निश्चितम् ॥ ९६ ॥

अर्थः-दूध तीन रात्रि प्रथम त्याग करे, हजामत पांच दिन पहले त्यागदे और यात्रा के दिन शहद खाना, तेल लगाना, उलटी ( वमन ) ये सब वर्जित हैं ॥ ९६ ॥

भुक्त्वा गच्छति यदि चेत्तैलगुडक्षारपक्वमांसानि ।
विनिवर्तते स रुग्णः स्त्रीद्विजमवमान्य गच्छतो मरणम् ॥६७॥

(अन्वयः) यदि चेत् तैलगुडक्षारपक्वमांसानि यो भुक्त्वा भोजनं कृत्वा गच्छति स राजादी रुग्णो रोगसहितो विनिवर्तते निवर्तते । अथ गमन समये, स्त्रीद्विजं अवमान्य मान भङ्गं कृत्वा गच्छतः पुंसो मरणं स्यादिति ॥ ६७ ॥

अर्थः-तेल गुड क्षार पका मांस ये वस्तु भोजन करके चले तो रोगी होकर पीछे लौट आवे । ब्राह्मण और स्त्री का तिरस्कार करके जाय तो मृत्यु होती है ॥६७॥

यदि मासु चतुर्षु पौषमासादिषु वृष्टिर्हि भवेदकालवृष्टिः ।
पशुमर्त्यपदांकिता न यावद्वसुधा स्यान्नहि तावदेव दोषः ॥६८॥

(अन्वयः) पौषमासादिषु चतुर्षु पौषमाघफाल्गुनचैत्राख्येषु मासु मासेषु यदि वृष्टिर्भवेत् हिनिश्चितंतर्हि अकालवृष्टिरुच्यते । यदि वसुधा पृथिवी पशुमर्त्यपदाङ्किता पशवो गावादयः मर्त्या मनुष्या स्तेषां पादै अरणै रंकिता चिन्हिता न भवति तावदकालवृष्टि दोषो नहि स्यादेव ॥ ६८ ॥

अर्थः-जो पौषके महीनेसे लेकर चार महीनेमें वर्षा होवै सो अकाल वृष्टि कही गई है । यदि इस वर्षामें मनुष्य या पशुके पदसें पृथ्वी चिहित न हो तो अति दोष और चिहित होवै तो दोष नहीं है ॥ ६८ ॥

आवश्यक यात्रामें दुष्ट शकुन आदिकों की शांति-

अल्पायां वृष्टौ दोषोऽल्पो भूयस्यां दोषो भूयान् ।
जीमूतानां निर्घोषे वृष्टौ वा जातायां भूपः ।
सूर्येन्दोर्बिंबे सौवर्णे कृत्वा विप्रेभ्यो दद्या-
द्दुःशाकुन्ये साज्यं स्वर्णं दत्वा गच्छेत्स्वेच्छाभिः ॥६९॥

(अन्वयः) अल्पायामकालवृष्टावल्पो दोषः स्यात् भूयस्यां अकालवृष्टौ भूयानतिशयेन महान्दोषः स्यात् । जीमूतानां मेघानां निर्घोषे शब्दे वृष्टौ जातायां वा सूर्येन्दोर्बिम्बे सौवर्णे कृत्वा भूयो राजा विप्रेभ्यो दद्यात् । दुःशाकुन्ये दुष्टे शकुने प्रस्थानकाले संभूते सति साज्यं संघृतं स्वर्णं सुवर्णं ब्राह्मणेभ्यो दत्वा स्वेच्छाभिगच्छेत् ॥ ६९ ॥

अर्थः-अकालवृष्टि अधिक होनेसे अधिक दोष और कम होनेसे कम दोष होता है और अकाल वृष्टि होवे अथवा मेघ गर्जे तो राजा सुवर्णका चन्द्रमा सूर्यका बिंब बना कर ब्राह्मणोंको देवै और दुष्ट शकुनमें सुवर्ण घृतदान देकर यात्रा करै।९९।

शुभसूचना करनेवाले शकुन—

विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं
वेश्यावाद्यमयूरचाषनकुलाबद्धैकपश्वामिषम् ।
सद्वाक्यं कुसुमेक्षुपूर्णकलशच्छत्राणि मृत्कन्यका
रत्नोष्णीषसितोक्षमद्यससुतस्त्रीदीप्तवैश्वानराः ॥१००॥
आदर्शांजनधौत वस्त्ररजका मीनाज्यसिंहासनं
शवि रोदनवर्जितं ध्वजमधुच्छागास्त्रगोरोचनम् ।
भारद्वाजनृयानवेदनिनदा मांगल्यगीतांकुशा
दृष्टाः सत्फलदाः प्रयाणसमये रिक्तो घटः स्वानुगः ॥१०१॥

(अन्वयः) विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं वेश्यावाद्यमयूरचाषनकुलाबद्धैकपश्वामिषमित्यादिभिः एते पदार्था गन्तुर्भूपादेः प्रयाणसमये यात्राकाले संमुखं दृष्टाः सत्फलदाः शुभफलदाः स्युः । तथा रिक्तोघटः जलरहितो कलशः स्वानुगः स्वस्य पश्चाद्भाग गामी सोपि शुभफलदः स्यात् ॥ १००-१०१ ॥

अर्थः—दो अथवा बहुत ब्राह्मण, घोड़ा, हस्ती, फल, अन्न, दूध, दही, गौ, सरसो कमल, वस्त्र, वेश्या, बाजा, मोर, पपैया, नेउला, बँधा एक पशु, मांस, श्रेष्ठवाक्य, फल, ऊख, भरा कलश, छाता, मृत्तिका, कन्या, रत्न, पगडी, सफेद बैल बिना बँधा मदिरा, पुत्रवती स्त्री, जलती अग्नि यह पदार्थ गमन समय में देखे तो अति शुभ है ॥ १०० ॥ सीसा, काजल, धोवा वस्त्र लिया हुआ धोबी, मछली, घृत, सिंहासन, रोदन रहित मुर्दा, ध्वजा, शहद, मेढा धनुष, गोरोचन, भरद्वाज पक्षी, नृयान (पालकी) वेदध्वनि, मांगलिक गान, अंकुश ये पदार्थ यात्रा के समय में सन्मुख आवें और बिना जलका घडा लिया हुआ आदमी पीछे आता हो तो अति श्रेष्ठ है ॥ १०१ ॥

अशुभसूचक अपशकुन—

वंध्याचर्मतुषास्थिसर्पलवणांगारेंधनक्लीबविट्-
तैलोन्मत्तवसौषधारिजटिलप्रव्राट्तृणव्याधिताः ।
नग्नाभ्यक्तविमुक्तकेशपतिता व्यंगक्षुधार्ता असृक्
स्त्रीपुष्पं सरटः स्वगेहदहनं मार्जारयुद्धं क्षुतम् ॥१०२॥
काषायी गुडतक्रपंकविधवाकुब्जाः कुटुम्बे कलि-
र्वस्त्रादेः स्खलनं लुलायसमरं कृष्णानि धान्यानि च ।
कार्पासं वमनं च गर्दभरवो दक्षेऽतिरुट् गर्भिणी
मुण्डार्द्राम्बरदुर्वचोऽन्धबधिरोदक्या न दृष्टाः शुभाः ॥१०३॥

( अन्वयः ) वन्ध्याचर्मतुषास्थिसर्पलवणांगारेन्धनक्लीबविट् तैलोन्मत्तवसौषधारिजटिलप्रव्राट् तृणव्याधिता । एते पदार्थाः गन्तुर्भूपादेर्यात्रासमये दृष्टाः सन्तो न शुभाः न शुभफलदाः स्युः किन्तु गमने अशुभ फलदाः ॥ १०२-१०३ ॥

अर्थः—बांझ स्त्री, चर्म, धानकी भूसी, हाड़, सर्प, लवण, अँगार, इंधन, हिजड़ा, विष्ठा लिये पुरुष, तैल, पागल, वसा। (चर्बी) औषध, शत्रु, जटावाला, संन्यासी, तृण, रोगी, बालक को छोड़ और कोई नंगा मनुष्य, तेल लगा कर बिना स्नान किया हुआ, छूटे केश, जाति से पतित, कान नाक कटा (अंग भंगी) भूखा, रुधिर, रजोधर्मवती स्त्री, गिरगिट, निज घर का जलना, बिलाओं का लड़ना, छींक, ये सन्मुख यात्रा समय में अशुभ हैं ॥ १०२ ॥ गेरू से रँगे कपड़े वाला, गुड, छांछ, कीच, विधवा स्त्री, कुबड़ा, कुल में लड़ाई, शरीर से वस्त्र गिर पड़ना, भैंसों की लड़ाई, काला अन्न रूई, वमन दहिने हाथ गधे का शब्द, अति क्रोध, गर्भवती, शिर मुँड़ा, गीले वस्त्रवाला, दुष्ट वचन बोलनेवाला, अन्धा, बहिरा, ये पदार्थ यात्रा समय में सन्मुख आवें तो अति निन्दित हैं ॥ १०३ ॥

दूसरे शुभशकुन—

गोधाजाहकसूकराहिशशकानां कीर्तनं शोभनं

नो शब्दो न विलोकनं च कपिऋक्षाणामतो व्यत्ययः ।
नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे
व्यत्यस्ताःशकुना नृपेक्षणविधौ यात्रोदिताः शोभनाः १०४

( अन्वयः ) गोधाजाहकसूकराहिशशकानां कीर्तनं शोभनं स्यात् । च पुनः गोधादीनां शब्दोरुतो विलोकनं दर्शनं च न शोभनं । अतः अत्र गमनसमये कपिऋक्षाणां व्यत्ययः यथा वानराणां भल्लूकानां कीर्तनं निषिद्धम् । तेषामेव शब्दितं दर्शनं वा न निषिद्धं किन्तु शोभनमिति । नद्युत्तारभयप्रवेशसमरे नष्टार्थसंवीक्षणे एतत्सम्बन्धिनि गमने क्रियमाणे सति प्रागुक्ताः शुभाशुभाः शकुनाः व्यत्यस्ताः ज्ञेयाः । नृपेक्षणविधौ दर्शनार्थगमने यात्रोदिताः यात्रायामुदिता विप्राश्वेभेत्यादयः शुभशकुनाः शोभनाः ज्ञेयाः ॥१०४॥

अर्थः-गोह, जाहा, सूकर, सर्प, खरगोश इनका शब्द शुभ है । निज वा पर मुख से इनका नाम लेना शुभ है परन्तु इनका शब्द और दर्शन शुभ नहीं है रीछ वानर का इनसे विपरीत फल है । नदी का तैरना, भय कार्य, गृह प्रवेश, नष्ट वस्तु का देखना इनमें विपरीत शकुन शुभ हैं, राजा के दर्शन में यात्रा में कहे शकुन शुभ हैं ॥ १०४ ॥

कोकिलादि शकुन-

वामांगे कोकिला पल्ली पोतकी सूकरी रला ।
पिंगला छुच्छुकाः श्रेष्ठाः शिवाः पुरुषसंज्ञिताः ॥१०५॥

( अन्वयः ) कोकिलापल्लयौ प्रसिद्धौ पोतकी दुर्गेति पितृचरणाः, सूकरी जात्यचटिका, रला पक्षिविशेषः । पिंगला भैरवी, छुच्छुका छुच्छुन्दरी, शिवा शृगाली, पुरुषसंज्ञिताः कपोतादयः । एते गच्छतां राजादीनां वामांगे शरीरवाम भागे शस्ताः स्युः ॥ १०५ ॥

अर्थः—कोयल, छिरकल पोतकी, सूकरी ( रल पिंगला ) छुछुन्दरि, सियारिन और पुरुष संज्ञक ( कपोत खञ्जन तीतर इत्यादि ) पक्षी यदि राजा को यात्रा समय में वाम भागमें हों तो शुभ है ॥ १०५ ॥

छिक्करः पिक्ककोः भासः श्रीकण्ठो वानरो रुरुः ।
स्त्रीसंज्ञकाः काकऋक्षश्वानाः स्युर्दक्षिणाः शुभाः ॥१०६॥

( अन्वयः ) छिक्करो मृगजातिः, पिक्कः पक्षिविशेषः, भासःपक्षी, श्रीकण्ठः पक्षिविशेषः, वानरः, रुरुमृगविशेषः, स्त्रीसंज्ञकाः, काकः, ऋक्षो भल्लूकः, एते यात्रायां गन्तुर्भूपादेः दक्षिणभागगताः शुभाः शुभफलदाःस्युः ॥ १०६ ॥

अर्थः—छिक्कर, पिक्कक, ( पपीहा ) भास, श्रीकण्ठ, वानर, रुरुमृग, ( काला मृगा ) कउवा, ऋक्ष, ( रीछ ) कुत्ता, और यात्री संज्ञक पक्षी यदि यात्रा समयमें दक्षिण भाग में हों तो शुभ होता है ॥ १०६ ॥

अन्य कई पक्षियोंके प्रदक्षिणगमनमें—

प्रदक्षिणगताः श्रेष्ठा यात्रायां मृगपक्षिणः ।
ओजा मृगा व्रजंतोऽतिधन्या वामे खरस्वनः॥ १०७ ॥

( अन्वयः ) मृगपक्षिणः यात्रायां प्रदक्षिणगताः श्रेष्ठाः शुभफलदाः स्युः परंतु मृगा ओजा विषमसंख्या स्त्रिपंचसप्तादयश्चेद् व्रजन्तो दृष्टा स्युस्तदा अतिधन्याः । स्ववामभागे खरस्वनो गर्दभशब्दोतिधन्यः ॥ १०७ ॥

अर्थः-दहिने तरफ आये हुये मृगा और पक्षी, यात्रामें शुभ हैं । विषम संख्य कमृग चलते हुए शुभ हैं, यात्रा समय में बायें तरफ गदहेका शब्द शुभ है ॥१०७॥

आवश्यकतामें दुष्ट शकुनका परिहार-

आद्येऽपशकुने स्थित्वा प्राणानेकादश व्रजेत् ।
द्वितीये षोडश प्राणांस्तृतीये न क्वचिद्व्रजेत् ॥ १०८ ॥

( अन्वयः ) अत्र गमन समये यदा अपशकुने 'वन्ध्या चर्म' इत्यादिके विरुद्धे शकुने आद्ये प्रथमे संजाते सति एकादश संख्यकान् प्राणान् स्थित्वा, तत्रापि द्वितीये दुष्टशकुने षोड़शसंख्यकान् प्राणान् स्थित्वा शुभशकुने व्रजेत । तत्रापि पुनस्तृतीये दुष्टशकुने संवृत्ते क्वचिद् न व्रजेत् किन्तु परावृत्य गृहं गच्छेत् ॥ १०८ ॥

अर्थः--जरूरी कार्यमें अपशकुन हो जावै तो ग्यारह श्वास ठहर कर चलै । दूसरे अपशकुनमें सोलह श्वास ठहर जावै और तीसरे अपशकुनमें कदापि न यात्रा करै, यदि यात्रा करे तो अति अशुभ है ॥ १०८ ॥

यात्रासे फिर गृहप्रवेशमें मुहूर्त—
इष्ट नक्षत्रसे आय विस्तार का प्रमाण-

यात्रानिवृत्तौ शुभदं प्रवेशनं

मृदुध्रुवैः क्षिप्रचरैः पुनर्गमः ।
द्वीशेऽनले दारुणभे तथोग्रभे
स्त्रीगेहपुत्रात्मविनाशनं क्रमात् ॥ १०६ ॥

( अन्वय. ) मृदुध्रुवैः क्षिप्रचरैः नक्षत्रैः राज्ञां यात्रानिवृत्तौ प्रवेशनं शुभदं स्यात् । पुनरपिराज्ञो गमो यात्रा स्यात् । तस्मादेतानि मध्यमानि । द्वीशेऽनले दारुणभे मूलज्येष्ठाद्रिश्लेषासु नक्षत्रेषु तथा उग्रनक्षत्रे प्रवेशे क्रमात् स्त्रीगेह पुत्रात्मविनाशनंस्यादित्यर्थः ॥ १०६ ॥

अर्थः-यात्रासे लौटकर मृदु ध्रुव संज्ञा वाले नक्षत्रोंमें प्रवेश शुभ होता है, यदि क्षिप्र और चर संज्ञक नक्षत्रोंमें प्रवेश करे तो फिर शीघ्र ही यात्रा करनी पड़ती है, अतः ये नक्षत्र प्रवेशमें मध्यम है । यदि विशाखा कृत्तिका दारुण उग्र संज्ञक नक्षत्रोंमें घरमें प्रवेश करे तो स्त्रीय घर पुत्र आत्मा का क्रमसे नाश होवै।।१९॥

विवाहप्रकरणोक्त दोषोंका पुनः स्मरण—

( अन्वयः ) अयनर्क्षमासतिथिकालवासरोद्भवशूलसम्मुखसितज्ञदिक्कपाः भृगुवक्रतादिपरिघाख्यदण्डकोयुवतीरजःअपि अशुचिता जननाशौचं मरणाशौचं च उत्सवादिकं विवाहादिकम् । एते दोषा विवाहप्रकरणोकाश्च दोषा यात्रायां कर्त्तव्यायां नेष्टाः ॥ ११० ॥

अर्थः—अयन नक्षत्र मास तिथि काल वार इनसे उत्पन्न दोष दिक्शूल शुक्र बुध दिशाके स्वामी का सन्मुख होना, शुक्र वक्री अस्त क्षीण पराजित बालवृद्ध दोष परिघदंड रजस्वला स्त्री का जन्म मरणका अशौच उत्सव आनन्द दीपोत्सव आदि शब्दसे विवाह यज्ञोपवीत ऐसे समयमें, राजा यात्रा कदापि न करै ॥ ११० ॥

मृतपक्षरिक्तरवितर्कसंख्यकास्तिथयश्चसौरिरविभौमवासराः ।
अपि वामपृष्ठगविधुस्तथाडलोवसुपंचकाभिजिदथापिदक्षिणे१११

( अन्वयः ) मृतपक्षरिक्तरवितर्कसंख्यकाः तिथयः सौरिरविभौमवासराः वापि वामपृष्ठगविधुश्चन्द्रः तथा अड्लो योगः अथापि वसुपंचकाभिजित् । एते पंचांगदोषाः ॥ १११ ॥

अर्थः—मृतपक्ष चौथ नवमी चतुर्दशी द्वादशी छठ अष्टमी पूर्णिमा अमावस शुक्लपक्ष की प्रतिपदा शनैश्चर एतवार मंगलवार पीछे चन्द्रमा आडलमुहूर्त

दक्षिण दिशाकी यात्रामें पंचक ( अर्ध धनिष्ठा से लेकर रेवतीपर्यन्त ) अभिजित् मुहूर्त यह सब अशुभ हैं ॥ १११ ॥

अब लग्नके दोषोंका विवरण—

लग्नं जन्मर्क्षतन्वोर्मृतिगृहमहितर्क्षाच्च षष्ठं तदीशा
वा लग्ने कुंभमीनर्क्षनवलवतनू चापि पृष्ठोदयं च ।
पृष्ठाशामृक्षसंस्थं दशमशनिरथो सप्तमे चापि काव्यः
केंद्रे वक्राश्च वक्री ग्रहदिवसविवाहोक्तदोषाश्च नेष्टाः ॥११२॥

इति मुहूर्तचिंतामणौ यात्राप्रकरणम् ॥ ११ ॥

(अन्वयः) जन्मर्क्षतन्वोर्मृतिगृहं अष्टमगृहं अहितर्क्षात् शत्रुराशेः शत्रुलग्नाद्वा षष्ठं स्थानं लग्ने यात्रालग्ने स्थिते । तदीशा वा लग्ने, कुंभमीनर्क्षनवलवतनू चापि पृष्ठोदयं च लग्ने । पृष्ठाशामृक्ष संस्थं, अथ दशमशनिः, काव्यः शुक्र श्चापिसप्तमे, केन्द्रे वक्राः, वक्रिग्रहदिवसा वाराः । विवाहोक्तदोषाश्च । एते दोषा यात्रायां नेष्टाः अवश्यं वर्ज्याः ॥ ११२ ॥

अर्थः—निज जन्म राशि से आठवीं राशि व जन्म लग्न से आठवीं राशि, अथवा शत्रु की जन्म राशिसे या जन्म लग्न से छठवीं राशि अथवा इन राशियों के स्वामी कुंभ मीन का नवमांश या कुंभ मीन लग्न या पृष्ठोदय लग्न यात्रा की लग्न में हों और पीछे स्थित नक्षत्र होवें या यात्रा लग्नसे शनैश्चर दशवें स्थान में होवें और शुक्र सातवें स्थान में हो वक्रीग्रह १।४।७।१० स्थान में हों और वक्रीग्रहोंका वार होवै यह सम्पूर्ण दोष, विवाह कर्ममें कहे हुए दोष ये सब यात्रा मुहूर्त में अशुभ हैं, ऐसे दोषों में कभी भी यात्रा न करै ॥ ११२ ॥

मुहूर्तचिन्तामणौ भाषाटीकायां यात्राप्रकरणं
समाप्तम् ॥ ११ ॥

# वास्तुप्रकरणम् ॥ १२ ॥

घरविषय अपना शुभाशुभ विचार--

यद्भं द्व्यंकसुतेशदिङ्मितमसौ ग्रामः शुभो नामभा-
त्स्वं वर्गं द्विगुणं विधाय परवर्गाढ्यं गजैः शेषितम् ।
काकिण्यस्त्वनयोश्च तद्विवरतो यस्याधिकाः सोऽर्थदो-
ऽर्थं द्वारं द्विजवैश्यशूद्रनृपराशीनां हितं पूर्वतः ॥ १ ॥

(अन्वयः) नामभात्पुरुषनामराशेः सकाशात् यद्भं यस्य ग्रामस्य भं राशिः स चेत् द्व्यङ्कसुतेशदिङ्मितं द्वितीयो नवम पंचम एकादश संख्यो दशमश्चेत्स्यात् तदा असौ ग्रामः स्वस्य शुभः शुभफलदाता स्यात्, अन्यथा चेत्तर्हि शुभो न भवति। स्वं स्वस्य वर्गं द्विगुणं विधाय कृत्वा परवर्गाढ्यं अन्यस्य ग्रामस्य वर्गयुक्तं गजैरष्टभिः शेषितं अवशिष्टं ताः काकिण्यो ज्ञेयाः पुन्सः। एवं ग्रामस्यासिः स्ववर्गसंख्यां द्विगुणां कृत्वा परस्य पुन्सः वर्गसंख्यया युक्तां च कृत्वा गजभक्ताः अवशिष्टाः काकिण्यो ग्रामस्य भवंति। एवं अनयोः पुरूषग्रामयोः काकिण्यः स्युः। तत्र तद्विवरतः यस्याधिकाः स अर्थदः स्यात्। अथ पूर्वतः द्विजवैश्यशूद्रनृपराशीनां द्वारं हितमिति ॥ १ ॥

अर्थः—जिस ग्राम में मनुष्य वसने की इच्छा करै उस ग्रामकी राशि, प्रसिद्ध नाम राशि से दूसरे, ९ नवमें पांचवें ५ ग्यारहवें ११ दशवें १० हो उस ग्राममें वास करना शुभ है। मनुष्यके नामके वर्गको दुगुना करके उसमें ग्रामका वर्ग मिलादे, आठका भाग देनेसे जो बचे उसे अलग रख देवे फिर ग्रामके वर्गको दुगुना करके मनुष्यके नामके वर्गमें मिला देवे और आठका भाग देनेसे जो बचे उसको भी अलग रख देवे फिर दोनोंमेंसे जिसके अंक अधिक होवे वही धनका देनेवाला होता है। कर्क वृश्चिक, मीन इनकी ब्राह्मण संज्ञा है इनको पूर्व दिशाका दरवाजा करना शुभ है। वृष, कन्या, मीन मकर इनकी वैश्य संज्ञा है इनको दक्षिण दिशाका द्वार करना श्रेष्ठ है। मिथुन, तुला, कुम्भराशि शूद्र हैं इनको दरवाजा पश्चिमका शुभ होता है। मेष सिंह, धन इनकी क्षत्रिय

संज्ञा वालोंको उत्तर दिशाका द्वार अति श्रेष्ठ है ॥ १ ॥

राशिपरत्वसे ग्राममें रहनेमे निषिद्ध स्थान—

गोसिंहनक्रमिथुनं निवसेन्न मध्ये
ग्रामस्य पूर्वककुभोऽलिझषांगनाश्च ।
कर्को धनुस्तुलभमेषघटाश्च तद्व-
द्वर्गाः स्वपंचमपरा बलिनः स्युरैन्द्र्याः ॥ २ ॥

(अन्वयः) ग्रामस्य मध्ये गोसिंहनक्रमिथुनं न निवसेत् अथ ग्रामस्य पूर्वककुभः पूर्वदिशातोऽष्टदिक्षु अलिझषांगनाः कर्को धनुस्तुलभमेषघटाश्च एतत् राशि न निवसेत् । अथ तद्वत् वर्गाः अष्टौ ऐन्द्र्याः पूर्वदिशां आरभ्य अष्टदिक्षु बलिनः स्युः । कीदृशा वर्गाः स्वपंचपराः । यथा यस्य वर्गः पूर्वस्यां बली तेन पश्चिमायां द्वारं निवासो वा न विधेयः । एवं कवर्गादीनामाग्नेयादि सप्तदिक्षु बलित्वं सप्रयोजनं ज्ञेयम् ॥ २ ॥

अर्थः—वृष सिंह मकरमिथुन राशिवाले मनुष्य ग्राम मध्य में न बसें। वृश्चिक राशिवाला पूर्व, मीन राशि अग्निकोणमें कन्या दक्षिण दिशा में, कर्क नैर्ऋत्य दिशा में धन पश्चिममें, तुला वायव्य दिशामें, मेष उत्तर दिशामें, कुंभ ईशान कोण, में इस प्रकार इस दिशामें न वास करे। वर्गानुसार फल अवर्ग पूर्वमें, कवर्ग अग्नि कोणमें चवर्ग दक्षिणमें, टवर्ग नैर्ऋत्यदिशामे, तवर्ग पश्चिम दिशामें पवर्ग वायव्य कोणमें, यवर्ग उत्तर दिशामें, शवर्ग ईशान कोणमें बली है और अपने से पांचवां वर्ग कोणमें, यवर्ग उत्तर दिशामें, शवर्ग ईशान कोणमें बली है अपने से पाँचवाँ वर्ग वैरी है ॥ २ ॥

एकोनितेष्टर्क्षहता द्वितिथ्यो
रूपानितेष्टायहतेंदुनागैः ।
युक्ता घनैश्चापि युता विभक्ता
भूपाश्विभिः शेषमितो हि पिंडः ॥ ३ ॥

(अन्वयः)एकोनित इष्टर्क्षं कल्पितं यद्गणर्यं तेन हता गुणिता द्वितिथ्यः १५२ कार्याः । ततो रूपेणोनितोय इष्टायो ध्वजादिकः तेन हता इन्दुना गाः एकाशीति

स्तथा गुणाः कार्याः । ततोधनैः सप्तदशभिरपि युता, युतास्ततो भूपाश्विभिः षोडशाधिकवंशत्या विभक्ता स्तथो भक्ते सति यच्छेषं अतो हि तन्मितः पिण्डः क्षेत्रफलं स्यात् ॥ अथ सपिंड स्वेष्टाय नक्षत्र भवः स्वस्य स्वगृहकर्तुरिष्टं यन्न क्षत्रं इष्ट आयश्च ताभ्यां भवतीति तादृशः स्यात् । पिंडः दैर्घ्यहृत् विस्तृतिः । विस्तारः स्यात् । अथ पिंडो विस्तृतिहृत् कल्पितविस्तरभक्तो दीर्घता स्यात्॥३॥

अर्थः-विवाहोक्तमेलापक विधिसे शुभद इष्ट नक्षत्रकी संख्यामें एक घटादे फिर एक सौ बावनसे गुणा करै ऐसे जो इष्टाय प्राप्त हुआ हो उसमेंसे एक कम करै फिर इक्कासीसे गुणा करै फिर गुणा किए दोनों फलोंको जोड़कर सतरह मिलायके दो सौ सोलहका भाग दे जो कुछ बचै उसकी पिंडसंज्ञा है ॥३॥

ध्वजादि आय और द्वार का नियम—

स्वेष्टायनक्षत्रभवोऽथ दैर्घ्यहृत्स्या
द्विस्तृतिर्विस्तृतिहृच्च दीर्घता ।
आयो ध्वजो धूमहरिश्वगोखरे
भध्वांक्षकाः पिंड इहाष्टशेषिते ॥ ४ ॥

तथा फल—

ध्वजादिकाः सर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्वयमोत्तरे तथा ।
प्राच्यां वृषे प्राग्यमयोर्गजेऽथवा पश्चादुदक्पूर्वयमे द्विजादितः ।५।

( अन्वयः ) इह पिण्डे क्षेत्रफले अष्टशेषिते अष्टभक्ते सति यदवशिष्टा ये तत्परिमिता आया ध्वजादिकाः स्युः । यथा-ध्वजोधूम हरिश्च गोखरे भध्वाङ्क्ष काः स्युः । पुनः 'सर्वदिशि दिक्चतुष्टयेपि मुखं गृहद्वारं कार्यम् । तथा हरौ सिंहाये पूर्वयमोत्तरे पूर्वदक्षिणोत्तरदिक्षुद्वाराणि स्युः' । वृषाख्ये आये प्राच्यां दिश्येव मुखं कार्यम् । गजे गजाख्ये आये प्राग्यमयोः पूर्वदक्षिणदिशोर्गृहं कार्यं । अथवा द्विजादितः ब्राह्मणादिवर्णविभागेन पश्चादुदक् पूर्वयमे गृहद्वारं स्यादिति ॥ ४ ॥ ५ ॥

अर्थः-इस पिंडमें लम्बाईका भाग दे तो चौड़ाई निकल आती है और चौड़ाई का भाग देवें तो लम्बाई निकल आती है । पूर्वोक्त पिण्डमें आठका भाग देने से

एक बचे तो ध्वज आय होता है और दो २ बचे तो धूम्र आय होता है तीन ३ बचे तो सिंह चार ४ बचे तो श्वान आय; पांच ५ बचे तो वृष आय छ ६ बचे तो हस्ती आय आठ ८ अर्थात् शून्य बचे तो ध्वांक्ष आय होता है ॥ ४ ॥

अर्थः-यदि ध्वज आय होय तो गृहका द्वार चारो तरफ भी किया जाता है। सिंह आय होय तो पूर्व दक्षिण उत्तर दिशाको द्वार करना वृष आय होय तो केवल पूर्व दिशामें दरवाजा करना, हस्ती आय में पूर्व दक्षिणदिशा को द्वारा करना ब्राह्मण के गृहका द्वार पश्चिम, क्षत्रिय के गृह का द्वार उत्तर, वैश्यके स्थानका द्वार पूर्वको और शूद्रके स्थानका दरवाजा दक्षिणको करना ॥ ५ ॥

आरंभ में विशेष करके काल निषेध—

**गृहेशतत्स्त्रीसुखवित्तनाशोऽर्केन्दुजीज्यशुक्रे विबलेऽस्तनीचे ।**
**कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरस्थिते पृष्ठगते खनिः स्यात् ॥ ६ ॥**

( अन्वयः ) अत्र गृहारम्भे चेद् गृहस्वामिनो जन्मराशिवशात् अर्केन्दुजीज्य शुक्रे विबले निर्बले अस्ते अस्तगे नीचे नीचराशिगते सति क्रमाद् गृहेशतत्स्त्री सुखवित्तनाशो भवति । विधुवास्तुनोर्भेपुरः स्थिते संमखे सति कर्तुर्गृहेनिर्मा तुस्तस्मिन्गृहे स्थितिः निवासो न स्यात् । पृष्ठगते वा विधुवास्तु नोर्भे सति खनिः खननं स्यात् ॥ ६ ॥

अर्थः—सूर्य बलहीन व अस्तंगत या नीचका होवै तो गृह के स्वामी का नाश हो जावै यदि चन्द्रमा निर्बल अस्त नीच राशिपर स्थित हो तो घरके मालिक की स्त्री का नाश हो जावै और बृहस्पति निर्बल हो अस्त नीच राशि पर हो तो गृहस्वामीके सुख का नाश होवै यदि शुक्र निर्बल नीच राशि वा अस्त हो तो धनका नाश हो जावै । चन्द्रमा का नक्षत्र और वास्तुका नक्षत्र सन्मुख होवै और नीच होवै तो गृहस्वामी कदापि वास न करै जो पीठ पीछे होय तो धनकी चोरी हो जावै गृहस्वामी निर्धन सदैव रहे ॥ ६ ॥

व्ययकथन पूर्वक अंशक का ज्ञान—

**भं नागतष्टं व्यय ईरितोऽसौ ध्रुवादिनामाक्षरयुक् सपिंडः ।**
**तष्टो गुणैरिंद्रकृतांतभूवाद्यंशा भवेयुर्नशुभोंतकोऽत्र ॥ ७ ॥**

( अन्वयः ) प्रागुक्तदिशाकल्पितं यद्गृहभं तत् नागैरष्टभिः तष्टं भकावशिष्टं स व्यय ईरितः । असौ व्ययः ध्रुवादिनामाक्षरयुक् ततः सपिण्डः प्रागानीत

पिंड युक्तः गुणैस्त्रिभिः तष्टः विभक्ते सति इन्द्रकृतान्तभूपा हि अंशा अन्तकः भवेयुः । अत्र अन्तको यमः अंशकः न शुभः स्यादिति ॥ ७ ॥

अर्थः—पूर्व कहे हुये जो दिशाके नक्षत्र हैं उन नक्षत्रों में आठ का भाग देने से जो बचे वह व्यय संज्ञक है और उस व्यय में ध्रुव आदि के नाम के अक्षर मिला दे उसको पिंड में जोड़कर तीनका भाग देवे एक बचे तो इन्द्र, दो बचे तो यम तीन बचे तो राजा ये अंश होते हैं सो यम का अंश शुभदायक नहीं है और इन्द्र राजा ये दो अंश शुभप्रद हैं ॥ ७ ॥

शाला ध्रुवादि आनयन का प्रकार—

**दिक्षु पूर्वादितः शाला ध्रुव भूद्वौ कृता गजाः ।**
**शालाध्रुवांकसंयोगः सैको वेश्मध्रुवादिकम् ॥ ८ ॥**

( अन्वय. ) पूर्वादितो दिक्षु प्राच्यादिषु दिक्षु भूः द्वौ कृता गजाः इमे शाला ध्रुवाः स्युः । अत्रशालाध्रुवाङ्कसंयोगः सैकः एक युक्तः सतु ध्रुवादिकं वेश्म गृहं स्यादिति ॥ ८ ॥

अर्थः—पूर्व दिशा से आरम्भ करके शाला ध्रुवाङ्क जाने । पूर्व दिशा का शाला ध्रुवांक एक होता है । दक्षिण दिशा के दो २ शाला ध्रुवांक होते हैं । पश्चिम दिशाके चार ४ शाला ध्रुवांक होते हैं । उत्तर दिशा के आठ ८ शाला ध्रुवांक होते हैं जिस २ दिशा में मकान का दरवाजा बनवावे उन उन दिशाओं के शाला ध्रुवांकों का योग कर फिर एक अंश और जोड़ देनेसे जैसी गिनती के समान गृहका नाम जानना ॥ ८ ॥

ध्रुवादिकोंको नामाक्षर संख्या—

**तिथ्यर्काष्टाष्टिगोरुद्रशक्रे नामाक्षरं त्रयम् ।**
**भूद्व्यब्धीष्वंगदिग्वह्निविश्वेषु द्वौ नगेऽब्धयः ॥ ९ ॥**

( अन्वयः ) तिथ्यार्काष्टाष्टिगोरुद्रशक्रे पंचदशी, द्वादशी, अष्टमी, षोड़शी, नवमी, एकादशी, चतुर्दशी, वासरसंख्यापरिमिते स्यात्तदा नामाक्षरं त्रयं गृह-नामाक्षरत्रयात्मकं स्यात् । पुनरेवं भूद्व्यब्ध्यष्वङ्गदिग्वह्निविश्वेषु द्वौ गृहनामाक्षरं द्व्यात्मकं स्यात् । नगे सप्तमी संख्या स्यात्तदा अब्धयश्चतुरक्षरं गृहनाम ॥ ९ ॥

अर्थः—ऊपर कहे हुए एक युक्त अङ्कोंका योग पन्द्रह १५ बारह १२ आठ ८ सोलह १६ हो तो नव ९ ग्यारह ११ चौदह १४ तीन अक्षरका नाम जानै औ

एक १ दो २ चार ४ पाँच ५ छः ६ दश १० तीन ३ तेरह १३ हो तो दो अक्षरका नाम जाने, सात हो तो चार अक्षरका नाम जाने ॥ ९ ॥

ध्रुवधान्ये जयनंदौ खरकांतमनोरमं सुमुखदुर्मुखोग्रम् ।
रिपुदं वित्तदनाशे चाक्रंदं विपुलविजयाख्यं स्यात् ॥ १० ॥

(अन्वयः) ध्रुवधान्ये जयनन्दौ खरकान्तमनोरमं सुमुखदुर्मुखोग्रं च रिपुदं वित्तदं नाशं चाक्रन्दंविपुलविजयाख्यं षोडशगृहं स्यादेव ॥ १० ॥

अर्थः—उपरोक्त शेष संख्या एकादिक हो तो ध्रुव, धान्य, जय नंद, खर, कांत, मनोरथ, सुमुख, दुर्मुख, उग्र, रिपुद, धनद, नाश, आक्रन्द, विपुल, विजय, यहक्रम से गृहकी संज्ञा होती है ॥ १० ॥

कितनेके मतसे आयादि नव की संख्या—

पिंडे नवां ९ कां ९ ग ६ गजा ८ ग्नि ३ ९ नाग-
नागा ८ ब्धि ४ नागै ८ र्गुणिते क्रमेण ।
विभाजिते नाग ८ नगां ७ क ९ सूर्य १२ नाग ६
र्क्ष २७ तिथ्य १५ र्क्ष २७ खभानुभि १२० श्च ॥ ११ ॥
आयो वारोंऽशको द्रव्यमृणमृक्षं तिथिर्युतिः ।
आयुश्चाथ गृहेशर्क्षगृहमैक्यं मृतिप्रदम् ॥ १२ ॥

(अन्वयः) पिंडे क्षेत्रफले नवधा स्थापिते क्रमेण नवाङ्काङ्गगजाग्निनाग नागाब्धिनागैः गुणिते क्रमेण नाम नगाङ्कसूर्यनगर्क्षतिथ्यृक्षखभानुभिः विभाजिते विभक्ते सति क्रमेण आयोवारोंऽशको द्रव्यमृणमृक्षं तिथिर्युतिः आयुः स्यात् । अथ गृहेशर्क्षगृहमैक्यं तदा मृतिप्रदं स्यात् ॥ ११ ॥ १२ ॥

अर्थ—प्रथम जो शेषका नाम पिंड है उसको ९ । ९ । ६ । ८ । ३ । ८ । ८ । ४ । ८ इन अंकोंसे अलग २ गुणन करै फिर गुणफल में पृथक् क्रम से ८ । ७ । ९ । १२ । ८ । २७ । १५ । २७ । १२० का भाग देने से क्रमसे आय, वार, अंश द्रव्य, ऋण, नक्षत्र, तिथि, योग आयुकी संख्या होती है । गृहपति का नक्षत्र और गृह अर्थात् गृहका नक्षत्र एक ही हो तो मरण होवै ॥ १२ ॥

गेहाद्यारंभेऽर्कभाद्वत्सशीर्षे रामै ३ र्दाहो वेद ४ भैरग्रपादे ।

शून्यं वेदैः४पृष्ठपादे स्थिरत्वं रामैः३पृष्ठे श्रीर्युगैः४र्दक्षकुक्षौ ।१३।
लाभोरामैः३पुच्छगैःस्वामिनाशोवेदैर्नैःस्व्यं वामकुक्षौ मुखस्थैः।
रामैःपीडा संततं वार्कधिष्ण्यादश्वै७रुद्रै र्दिग्भि१०रुक्तंह्यसत्सत्१४

( अन्वयः ) गेहाद्यारम्भे अर्कभात् रामैर्वत्सशीर्षे स्थितैश्चेत्तदा दाहः फलं स्यात् । एवं वेदभैश्चतुर्भिः नक्षत्रैः अग्रपादे स्थितैः शून्यं फलं स्यात् । ततः वेदैः पृष्ठपादे स्थिरत्वं स्यात् । रामैः पृष्ठे स्थितैः श्रीःस्यात् । युगैर्दक्षकुक्षौस्थितै र्लाभः । रामैः पुच्छगैश्चेत्तदा स्वामिनाशः । वेदैर्वामकुक्षौ चेत्तदा नैःस्व्यंदारिद्र्यम् । रामै र्मुखस्थैश्चेत्तदा गृहकर्तुः पीडा संततं स्यात् । अथवा वत्सचक्रस्य अर्कधिष्ण्यात् अश्वै रुद्रैर्दिग्भिः चन्द्रनक्षत्रैः असत्सत् हि उक्तमिति ॥ १३ ॥ १४ ॥

अर्थः—जब मनुष्य नवीन मकान आदि बनवाना चाहे तो जिस नक्षत्र पर सूर्य हो उस नक्षत्रसे दिनके नक्षत्र तक गिनै फिर वृषवास्तु चक्रमें स्थापित करे । तीन नक्षत्र वृषके शिरपर स्थापित करै वे घर आदिमें अग्नि लगाने वाले हैं । फिर चार ४ नक्षत्र वृषके अगले पैरोंमें स्थापित करै वे मकानको स्थिर करनेवाले हैं फिर तीन ३ नक्षत्र वृषके पीठपर स्थापित करै ,वे लक्ष्मी देते हैं फिर चार ४ वृषकी दक्षिण कुक्षि में स्थित करै वे लाभ देते हैं ॥ १३ ॥ फिर तीन ३ नक्षत्र वृषके पुच्छमें स्थापित करै ये गृह स्वामीका नाश करते हैं फिर ४ नक्षत्र वृषकी वामकोखमें स्थापित करै वे दरिद्रता करते है फिर तीन नक्षत्र वृषके मुखमें स्थापित करै वे निरंतर पीड़ा ही करते हैं । जिस नक्षत्रके सूर्य होवैं उससे ७ नक्षत्र अशुभ फलप्रद हैं फिर ग्यारह ११ नक्षत्र शुभफल देते हैं फिर १० दस नक्षत्र अशुभ फलप्रद है ॥ १४ ॥

पूर्वादि दिशामें द्वार और गृहनिर्माणमें नक्षत्र—

कुंभेऽर्के फाल्गुने प्रागपरमुखगृहं श्रावणे सिंहकर्क्योः
पौषे नक्रे च याम्योत्तरमुखसदनं गोजगेऽर्के च राधे ।
मार्गे जूकालिगे सत् ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः
सूतीगेहं त्वदित्यां हरिभविधिभयोस्तत्र शस्तः प्रवेशः ॥१५॥

(अन्वयः) कुम्भे कुम्भस्थितेऽर्के फाल्गुने फाल्गुनमासे प्रागपरमुखं गृहं सत् शुभफलदं स्यादिति। एवं श्रावणे सिंहकर्क्योः सिंहकर्क संक्रान्त्योः प्रागपरमुखं च

गृहं स्यात्। पौष नक्रे मकरसंक्रान्तौ च प्रागपरमुखं गेहं स्यात्। अथ गोऽजगे अर्के राधे वैशाखमासे, तथा मार्गे जूकालिगे सूर्ये सति याम्योत्तरे मुखं सदनं स्यात्। ध्रुवमृदुवरुणस्वातिवस्वर्कपुष्यैः तु पुनः अदित्यां हरिभविधिभयोः सूतीगेहं सूतीगृहनिर्माणं सत्स्यात्। तत्र तस्मिन्नक्षत्रे प्रवेशः शस्तः स्यात् ॥१५॥

अर्थः—कुम्भके सूर्यमें फाल्गुनके मासमें और श्रावण मासमें सिंह कर्ककी संक्रांति में और पूस में मकर की संक्रांति में जो गृह बनावै तो पश्चिम या पूर्व दिशा में गृहद्वार रक्खे इसी तरह वृष के और मेष के सूर्य में वैशाखमें और वृश्चिक के सूर्य में मार्गशीर्ष में जो गृह बनवावै उसका दक्षिण या उत्तर दिशा में द्वार रक्खे तो शुभ होता है। तीनों उत्तरा रोहिणी मृगशिरा रेवती चित्रा अनुराधा शतभिषा स्वाती धनिष्ठा हस्त पुष्य इन नक्षत्रों में गृह बनाने का प्रारम्भ करना चाहिये। सूतिका गृह (लड़का उत्पन्न का स्थान) पुनर्वसु नक्षत्र में बनवावै और श्रवण व रोहिणी नक्षत्र में इस सूतिका गृहमें प्रवेश करना शुभ है ॥ १५ ॥

सौर चान्द्रमासों की दूसरे प्रकार से एकवाक्यता—

> कैश्चिन्मेषरवौ मधौ वृषभगे ज्येष्ठे शुचौ कर्कटे
> भाद्रे सिंहगते घटेऽश्वयुजि चोर्जेऽलौ मृगे पौषके।
> माघे नक्रघटे शुभं निगदितं गेहं तथोर्जे न स-
> त्कन्यायां च तथा धनुष्यपि न सत्कृष्णादिमासाद्भवेत्॥१६॥

(अन्वयः) मेषरवौ मधौ चैत्रमासि गेहं शुभं निगदितं एवं वृषभगे ज्येष्ठे, कर्कटे शुचौ, सिंहगते भाद्रे, घटेऽश्वयुजि आश्विनमासे, अलौ वृश्चिकगेऽर्के ऊर्जे कार्तिके, मृगे पौषके, नक्रघटे माघे, एवंविधमासे गेहं गृहप्रारम्भं शुभं स्यादिति कैश्चिन्निगदितम्। तथा कन्यायां अर्केसति ऊर्जे कार्तिके न सत्स्यात्। तथा धनुष्यपि कृष्णमासाद् सत् न भवेत् ॥ १६ ॥

अर्थः-कितने एक पंडितों का यह मत है कि मेषका सूर्य चैत्र में और ज्येष्ठ में वृषका, कर्कके सूर्य आषाढ में सिंह के सूर्य भाद्रपदमें तुलाके सूर्य आश्विन (कुआंर) में वृश्चिक के सूर्य कार्तिक में, मकरका सूर्य पौष में मकर या कुम्भका सूर्य माघमें हो तो गृहारंभ करना अतिशुभ है और कार्त्तिक में कन्या का सूर्य माघमें धनका सूर्य हो तो नया मकान बनाना शुभ नहीं है यह कृष्णादिमास से जानना।१६॥

तिथि परत्व से द्वारका निषेध—

**पूर्णेन्दुतः प्राग्वदनं नवम्यादिषूत्तरास्यं त्वथ पश्चिमास्यम् ।**
**दर्शादितः शुक्लदले नवम्यादौ दक्षिणास्यं न शुभं वदंति।१७।**

( अन्वयः ) पूर्णेन्दुतः कृष्णाष्टमी पर्यंतं प्राग्वदनं गृहं शुभं न वदन्ति। नवम्यादिषूत्तरास्यं कृष्णनवमी तश्चतुर्दशीपर्यन्तं गृहमुत्तास्य न शुभम्। अथ दर्शादितः शुक्लदले शुक्लाष्टमी पर्यन्तं पश्चिमास्यं गृहं न शुभं वदन्ति। नवम्यादौ शुक्लनवमी तश्चतुर्दशीपर्यन्त दक्षिणास्यं गृहं न शुभं वदन्ति ॥ १७ ॥

अर्थः—पौर्णमासी से कृष्णपक्ष की अष्टमी तक पूर्व दिशा का द्वार, कृष्णपक्ष की नवमी से चौदस पर्यन्त उत्तर दिशा में द्वार और अमावास्या से शुक्लपक्षकी अष्टमी तक पश्चिम दिशा का द्वार, और शुक्ल पक्ष की नवमी से चौदस पर्यन्त दक्षिणदिशा में द्वार करना अशुभ है ॥ १७ ॥

पंचांगशुद्धि और लग्नशुद्धि—

**भौमार्करिक्तामाद्यूने चरोने चे विपंचके।**
**व्यष्टांतयस्थैः शुभैर्गेहारंभस्त्र्यायारिगैः खलैः ॥ १८ ॥**

( अन्वयः ) भौमार्करिक्तामाद्यूने चरोने च विपंचके व्यष्टान्त्यस्थैः शुभैः शुभग्रहैः खलैः पापैस्त्र्यायारिगैः स्थितैः श्चेत्तदा गेहारम्भः कार्यः ॥ १८ ॥

अर्थः–मंगलवार रविवार चौथ नवमी चतुर्दशी अमावस प्रतिपदा अष्टमी चर लग्न ये न हों रोग अग्नि नृप चोर मृत्यु ये पांचो बाण न हों लग्न से आठवें और लग्न से बारहवें शुभग्रह न हों और तीसरे छठ ग्यारवें इन स्थानों में क्रूरग्रह हों तो गृहारंभ अतिशुभ है ॥ १८ ॥

देवालय आदि में विदिशा में राहुमुख–

**देवालये गेहविधौ जलाशये राहोर्मुखं शंभुदिशो विलोमतः ।**
**मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात पृष्ठविदिक्शुभा भवेत् १९**

( अन्वयः ) देवालये गेहविधौ जलाशये मीनार्कसिंहार्कमृगार्कतस्त्रिभेशम्भुदिशो विलोमतः राहोर्मुखं स्यात्। अत्र देवालयादिविषयके खाते भूमिशोधने कर्तव्ये सति मुखात् राहुमुखान्तस्था दिशा सकाशात् पृष्ठ दिक्शुभा भवेत् ॥ १९॥

अर्थः–नवीन देवता के मंदिर बनवाने में राहु मुख ईशान से मीन मेष वृष के

सूर्य में ईशान कोण में राहु मुख होता है। मिथुन कर्क सिंह राशि के सूर्य में वायव्य कोण में राहु मुख होता है। कन्या तुला वृश्चिक के सूर्य में नैर्ऋत्य कोण में राहुमुख होता है। धन मकर कुम्भ राशि के सूर्य में अग्नि कोण में राहु मुख होता है। नवीन मकान के आरम्भ में सिंह कन्या तुला राशि के सूर्य में ईशान-कोण में राहु मुख होता है वृश्चिक धन मकर राशि के सूर्य में वायव्यकोणमें राहु मुख होता है। कुम्भ मीन मेष राशि के सूर्य में नैर्ऋत्य कोणमें राहु मुख होता है। वृष मिथुन कर्क राशिके सूर्य में अग्निकोण विषे राहु का मुख होता है। कुआं तालाब आदिके आरंभमें मकर कुम्भ मीन राशि के सूर्य में ईशानकोण में राहु मुख होता है मेष वृष मिथुन राशिके सूर्य में वायव्य कोण में राहु मुख। कर्क सिंह कन्या राशिके सूर्य में नैर्ऋत्य कोण में राहु मुख तुला वृश्चिक धन राशिके सूर्य में अग्निकोणमें राहुमुख होता है। देवालय, मकान खात, जलाशयारम्भ में राहु मुख से पृथ्वी दिशामें खात करना शुभ है ॥ १९ ॥

कुआं खोदने में दिशा से फल—

कूपे वास्तोर्मध्यदेशेऽर्थनाश
स्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः।
सूनोर्नाशः स्त्रीविनाशो मृतिश्च
संपत् पीडा शत्रुतः स्याच्च सौख्यम् ॥ २० ॥

(अन्वयः) वास्तो र्मध्यदेशे कूपे अर्थनाशः स्यात्। अथैशान्यादौ जलकूपे कृते सति क्रमेण पुष्टिरैश्वर्यवृद्धिः सूनोर्नाशः स्त्रीविनाशो मृतिः संपत् शत्रुतः पीडा सौख्यं च स्यादिति ॥ २० ॥

अर्थः—गृहके मध्य में कुआं बनवाया जावे तो गृहस्वामी का नाश होवे, ईशान कोण में पुष्टि, पूर्व में ऐश्वर्य वृद्धिहोय, अग्निकोणमें पुत्रनाश, दक्षिण में स्त्रीनाश, नैर्ऋत्य में घरके स्वामी का मरण, पश्चिममें धन प्राप्ति वायव्य में शत्रुसे पीड़ा, उत्तर में सुख हो इस प्रकार शुभाशुभ जानना ॥ २० ॥

दिशापरत्व से उपकरण गृह—

स्नानस्य पाकशयनास्त्रभुजेश्चधान्य-
भांडारदैवतगृहाणि च पूर्वतः स्युः ॥

तन्मध्यतस्तु मथनाज्यपुरीषविद्या-
भ्यासाख्यरोदन रतौषधसर्वधाम ॥ २१ ॥

(अन्वयः) पूर्वतः स्नानस्य पाकशयनास्त्रभुजः धान्यभाण्डारदैवत गृहाणि च स्युः तु पुनः तन्मध्यतः मथनाज्यपुरीषविद्याभ्यासाख्यरोदनरतौष धसर्वधाम गृहाणि स्युरिति ॥ २१ ॥

अर्थः-पूर्वदिशा में स्नानघर अग्निकोण में रसोई घर, दक्षिण दिशामें शयनघर नैऋत्य दिशामें शस्त्रघर, पश्चिम, में भोजन स्थान, वायव्य ने अन्न संग्रहघर, उत्तर दिशा में खजाना स्थान, ईशान कोणमें देवता गृह., पूर्व और अग्निकोणके मध्यमें दूधदही, मथनेका स्थान चाहिये। अग्नि कोण और दक्षिण के मध्यमें घृतसं-ग्रह घर, दक्षिण, और नैऋत्य के मध्यमें विष्ठाकूप (पाखाना) स्थान, नैऋत्य और पश्चिमके मध्यमें विद्याभ्यास का स्थान और पश्चिम वायव्य के मध्यमें रोदनघर वायव्य उत्तरके मध्यमें भोजनगृह बनाना उत्तर और ईशान कोणके मध्यमें औषधि घर बनावै ईशान पूर्वके मध्यमें सर्ववस्तु संग्रह गृह बनवावै ॥ २१ ॥

जीवार्कविच्छुक्रशनैश्चरेषु लग्नारिजामित्रसुखत्रिगेषु ।
स्थितिः शतं स्याच्छरदां सितार्कारेज्ये तनुत्र्यंगसुते शते द्वे॥२२॥

(अन्वयः) जीवार्कविच्छुक्रशनैश्चरेषु क्रमेण लग्नारिजामित्रसुखात्रिगेषु स्थिति श्चेत्तदा शतं शरदां वर्षशतं स्यात् सितार्कारेज्ये तनुत्र्यङ्गसुते सति शतं द्वे शतद्वयमायुः स्यात् ॥ २२ ॥

अर्थः—लग्न में बृहस्पति, छठे सूर्य सातवें बुध, चौथे तीसरे शनिश्चर हो तो, गृह की स्थिति १०० (एकसौ वर्ष) रहती है। लग्न में शुक्र, तीसरे सूर्य, छठे मंगल पांचवें बृहस्पति हो तो घर की स्थिति (दो सौ) २०० वर्ष पर्यन्त रहती है ॥ २२ ॥

बहुकाल तक घर रहने का योग—

लग्नांबरायेषु भृगुज्ञभानुभिः केन्द्रे गुरौ वर्षशतायुरालयः ।
बंधौगुरुज्योम्निशशीकुजार्कजौलाभेतदाशीतिसमायुरालयः २३

(अन्वयः)-भृगुज्ञभानुभिः लग्नांबरायेषु केन्द्रे गुरौ लग्नव्यतिरिक्ते केन्द्रे गुरुः स्यात् तदैवंविधेयोगे आलयोगृहं वर्षशतायुःवर्षशतमायुः स्यात् बन्धौ गुरुः

व्योम्नि शशी, दशमे चन्द्रः कुजार्कजौ लाभे तदा आलयः गृहमशीतिसमा वर्षा एयायुः स्यादिति ॥ २३ ॥

अर्थः-लग्न में शुक्र दशवें बुध, ग्यारहवें सूर्य, केन्द्र में बृहस्पति ऐसे लग्न में प्रारम्भ किया गृह एकसौ १०० वर्ष का होता है। चौथे बृहस्पति, दशवें चन्द्रमा, ग्यारहवें मंगल शनैश्चर ऐसे लग्न में गृह का बनाना आरम्भ होय तो ८० वर्ष तक गृह की स्थिति रहती है ॥ २३ ॥

स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगतेऽथवा ।
शनौ स्वोच्चे लाभगे वा लक्ष्म्या युक्तं चिरं गृहम् ॥२४॥

( अन्वयः-) स्वोच्चे स्वोच्चस्थे शुक्रे लग्नगते वा गृहं चिरं लक्ष्म्य युक्तं स्यात्। अथवा स्वोच्चस्थे, गुरौ वेश्मगते चतुर्थस्थानगते वा सति तादृशमे वेगृहम्। अथवा स्वयच्चे शनौ लाभगे वा गृहं लक्ष्म्या युक्तं स्यादिति ॥ २४ ॥

अर्थः-मीन राशी का शुक्र लग्न में कर्क राशि का बृहस्पति चौथे स्थान में तुला राशी का शनिश्चर ग्यारहवें हो ऐसे में आरम्भ किया गृह लक्ष्मी से युक्त सदैव रहता है ॥ २४ ॥

दूसरेके तबे में घर जानेके योग--

द्यूनांबरे यदैकोऽपि परांशस्थो ग्रहो गृहम् ।
अब्दांतः परहस्तस्थं कुर्याच्चेद्वर्णपोऽबलः ॥ २५ ॥

( अन्वयः ) एकोऽपि ग्रहः परांशस्थः शत्रुनवांशस्थितः सन् यद्यऽधुनाम्बरे स्यात्तदा गृहं अब्दान्तर्वर्षमध्ये एव परं हस्तस्थं कुर्यात् वर्णप श्चेदबलः निर्बल इव तदा ॥ २५ ॥

अर्थः-शत्रुके नवमांशः में प्राप्त होकर जो एक भी बलवान् ग्रह-सातवें या दस स्थान में होवै और चारो वर्णों में जिसका मकान हो उसी वर्ण का स्वामी निर्बल अर्थात् बलरहित होवै तो वह मकान एकही वर्षके भीतर दूसरे मनुष्य के हाथ में चला जाय ॥ २५ ॥

पुष्यध्रुवेंदुहरिसर्पजलैः सजीवै--
स्तद्वासरेण च कृतं सुतराज्यदं स्यात् ।

द्वीशाश्वितत्त्ववसुपाशिशिवैः सशुक्रै-
र्वारे सितस्य च गृहं धनधान्यदं स्यात् ॥ २६ ॥

( अन्वयः ) पुष्यध्रुवेन्दुहरिसर्पजलैः नक्षत्रैः सजीवै गुरुयुक्तैः तद्वासरेण बृहस्पतिवारेण च कृतं कुर्युः आरब्धं गृहं सुतराज्यदं स्यात् । द्वीशाश्वितत्त्ववसुपाशिशिवैर्नक्षत्रैः सशुक्रैः शुक्रसहितैः सितस्यवारे च एतादृशे योगे कृतं गृहं धनधान्यदं स्यात् ॥ २६ ॥

अर्थः-पुष्यतीनों उत्तरा, रोहिणी मृगशिरा, आश्लेषा, पुर्वाषाढ़, ये बृहस्पति सहित हों और बृहस्पति वार होवै ऐसे योगोंमें प्रारम्भ किया गृह, धन पुत्र और राज्य करता है । विशाखा अश्विनी चित्रा धनिष्ठा शतभिषा आर्द्रा नक्षत्र शुक्र युक्त हों और शुक्रवार होवै ऐसे योगमें प्रारम्भ किया घर धन सोना अन्न आदिसे सदैव भरा रहता है ॥ २६ ॥

दूसरे दो योग--

सारैः करेज्यांत्यमघांबुमूलैः कौजेऽन्हि वेश्माग्निसुतार्तिदं स्यात् ।
सज्ञैः कदास्त्र्यर्यमतक्षहस्तैर्ज्ञस्यैव वारे सुखपुत्रदं स्यात् ॥२७॥

( अन्वयः ) करेज्यान्त्यमघाम्बुमूलैः नक्षत्रैः सारैर्मंगलयुक्तैः कौजेऽह्नि भौमवारे च कृत वेश्मगृहमग्निसुतार्तिदं स्यात् । कदास्त्र्यर्यमतक्षहस्तैः नक्षत्रैः सज्ञैर्बुधयुक्तैर्ज्ञस्यैव वारे च कृतं गेहं सुखपुत्रदं स्यात् ॥ २७ ॥

अर्थः--हस्त पुष्य रेवती मघा पूर्वाषाढा, मूल ये नक्षत्र हों और इन्हीं नक्षत्र पर लग्न होवै और मङ्गलवार हो ऐसे योग में प्रारंभ किया घर अग्नी औ पुत्र पीड़ा को देता है रोहिणी अश्विनी उत्तरा फाल्गुनी चित्रा हस्त नक्षत्रों पर बुध हो और बुध वार होवै तो ऐसे योग में गृहारंभ करना सुख और पुत्र को देता है ॥ २७ ॥

अजैकपादहिर्बुध्न्यशक्रमित्रानलान्तकैः ।
समंदैर्मंदवारे स्याद्रक्षोभूतयुतं गृहम् ॥ २८ ॥

( अन्वय ) अजैकपादहिर्बुध्न्यशक्रमित्रानिलान्तकैः नक्षत्रैः समन्दैः शनैश्चरयुक्तं मन्दस्ये च वारे च कृतं गृहं रक्षोभूतयुतं स्यात् ॥ २८ ॥

अर्थ-पूर्वाभाद्रपद उत्तराभाद्रपद ज्येष्ठा अनुराधी स्वाती भरणी नक्षत्रों पर शनिश्चर हो और शनिवार होवै, ऐसे योग में गृह के बनाने का प्रारम्भ करै तो घर राक्षस भूत पिशाचों ही का घर हो जाता है ॥ २८ ॥

कितनेओं के मत से चारचक्र—

सूर्यर्क्षाद्युगभः शिरस्यथ फलं लक्ष्मीस्ततःकोणभै-
र्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत् ।
देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः
सौख्यं चक्रमिदंविलोक्य सुधिया द्वारं विधेयं शुभम् ॥२९॥

इति मुहूर्तचिंतामणौ वास्तुप्रकरणम् ॥ ११ ॥

( अन्वयः ) अथ सूर्यर्क्षात् युगभै श्चतुर्भि र्नक्षत्रैः शिरसिस्थितैः लक्ष्मींप्राप्ति रूपं फलं स्यात् । ततः नागैः कोणभै रुद्वसनम् । ततः गजमितैः शाखासु सौख्यं भवेत् । ततः गुणभैस्त्रीभिर्नक्षत्रैर्देहल्या मध्यस्थितैः गृहपते र्मृतिः मरणं स्यात् । वेदभै श्चतुर्भिर्नक्षत्रै र्मध्यस्थितैः सौख्यं स्यात् । इद द्वारचक्रं विलोक्य सुधिया शुभ शुभ फलदात् द्वार विधेयं कर्तव्यमिति ॥ २९ ॥

अर्थ—जिस नक्षत्र पर सूर्य होवै उससे चार नक्षत्र शिर पर स्थित करै तिनमें लक्ष्मी मिलती है फिर आठ नक्षत्र कोण में स्थित करै उन नक्षत्रों में कोई भी मनुष्य वास नहीं करता । आठ नक्षत्र द्वार शाखाओं पर स्थित करै । इन में गृहस्वामी को सुख मिलता है पीछे तीन नक्षत्र देहली में स्थित करै उसमें द्वार बनाने से स्वामी की मृत्यु होती है पीछे चार नक्षत्र मध्य में स्थित करै इसमैं घर के स्वामी को सुख मिलता है । इस प्रकार यह द्वार चक्र है । इसको पंडित जन भली भांति देख कर द्वार स्थित करें ॥ २९ ॥

इति मुहूर्तचिंतामणौ भाषाटीकायां वास्तुप्रकरणं ॥ १२ ॥

—:*(*)*:—

# गृहप्रवेशप्रकरणम् ॥



गृहप्रवेश में लग्नशुद्धि—

**सौम्यायने ज्येष्ठतपोऽन्त्यमाधवे यात्रानिवृत्तौनृपतेर्नवे गृहे ।**
**स्याद्वेशनं द्वाःस्थमृदुध्रुवोडुभिर्जन्मर्क्षलग्नोपचयोदये स्थिरे॥१॥**

[ अन्वयः ]—सौम्यायने ज्येष्ठतपोन्त्यमाधवे यात्रा निवृत्तौ अथवा नवे गृहे द्वाःस्थ मृदुध्रुवोडुभिर्नक्षत्रैः जन्मर्क्षलग्नोदये तथा स्थिरे लग्ने नृपतेर्वेशन स्यादिति ॥ १ ॥

अर्थः—यात्रा से निवृत्त हो कर या नये मकान में राजा उत्तरायण सूर्य में ज्येष्ठ माघ, फाल्गुन, वैशाख ये महीने हों और जिस दिशा को मकान का दरवाजा हो उस दिशा के नक्षत्रों में से जो कृत्तिकादि सात २ नक्षत्र कहे गये हैं उनमें से मृगशिरा रेवती चित्रा अनुराधा उत्तरा फाल्गुनी उत्तराषाढ़ा, उत्तराभाद्रपद, रोहिणी ये नक्षत्र हों और निज जन्म राशि से या जन्म लग्न से प्रवेश करने का लग्न उपचय राशि होकर अर्थात् । ३ । ६ । ११ ।१० ये लग्न हों और स्थिर लग्न हो तो प्रवेश करै ॥ ॥

जीर्णगृह प्रवेशमें विशेष—

**जीर्णेगृहेऽग्न्यादिभयान्नवेऽपिमार्गोर्जयोःश्रावणिकेऽपि सत्स्यात्।**
**वेशोऽम्बुपेज्यानिलवासवेषु नावश्यमस्तादिविचारणाऽत्र ॥ २ ॥**

[ अन्वयः ] जीर्णे गृहेऽग्न्यादिभयान्नवेऽपि मार्गोर्जयोः श्रावणिकेऽपि मासे अम्बुपे ज्यानिल वासवेषु नक्षत्रेषु विशः प्रवेशः सत् शुभफलदः स्यात् अवश्यमात्र अस्तादि विचारणान विचारो नास्ति ॥ २ ॥

अर्थः—मार्गशीर्ष कार्तिक श्रावण महीनों के विषे अन्य किसी के बनाये हुए पुराने मकान में या अग्नि आदि भयसे नवीन भी मकान में शतभिषा स्वाती पुष्य धनिष्ठा इन नक्षत्रों में प्रवेश करना शुभ है । यहां पर गुरु शुक्र के अस्तादि दोषों का विचार न करै ॥ २ ॥

वास्तु नक्षत्र लग्नशुद्धि और तिथिवारशुद्धि--

मृदुध्रुवक्षिप्रचरेषु मूलभे वास्त्वर्चनं भूतबलिं च कारयेत् ।
त्रिकोणकेंद्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः॥३॥

[अन्वयः] मृदुध्रुवक्षिप्रचरेषु वास्तोर्वास्तुपुरुषस्यार्चनं भूतबलिं च कारयेत् ३

अर्थः-मृगशिरा रेवती चित्रा अनुराधा तीनों उत्तरा रोहिणी हस्त अश्विनी पुष्य अभिजित् स्वाती पुनर्वसु श्रवण धनिष्ठा शतभिषा मूल इन नक्षत्रों में नवें पांचवें प्रथम चौथे सातवें दसवें ग्यारहवें दूसरे तीसरे स्थानों में शुभग्रह हों और तीसरे छठे ग्यारहवें स्थानों में पापग्रह हों ऐसे लग्न में वास्तु पूजा और भूतवली करवावे ॥ ३ ॥

तिथि, वार, लग्नशुद्धि कथन--

शुद्धांबुरंध्र विजनुर्भमृत्यौ व्यर्काररिक्ताचरदर्शचैत्रे ।
अग्रेंऽबुपूर्णं कलशं द्विजांश्च कृत्वा विशेद्वेश्म भकूटशुद्धम् ॥४॥

[ अन्वयः ] अत्र गृहप्रवेशसमये त्रिकोण केन्द्राय धनत्रिगैः शुभैः । अत्र चन्द्रस्य लग्ने लग्नराहित्ये ध्येयम् । त्रिषष्ठायगतैः पापकैः पापग्रहे अम्बुरन्ध्र शुद्धे, विजनुर्भमृत्यौ, व्यर्काररिक्ताचरदर्शे चैत्रे अग्रे अम्बुपूर्णं कलशं द्विजांश्च कृत्वाभकूट शुद्धं वेश्म गृहमाविशेत् ॥ ३ ॥ ४ ॥

अर्थः--चौथा और आठवां स्थान शुद्ध होवे, एतवार मंगलवार न होय रिक्ता तिथी और अमावस्या न होय चर संज्ञक लग्न न हो और चैत्र महीना को छोड़कर भकूट शुद्ध होने पर जल पूरित घड़ा और पंडितों को आगे करके मकान में प्रवेश करै ॥ ४ ॥

वामगतार्कज्ञान पूर्वादिमुख गृहप्रवेश--

वामो रविर्मृत्युसुतार्थलाभतोऽर्के पंचभे प्राग्वदनादिमंदिरे ।
पूर्णातिथौ प्राग्वदने गृहे शुभोनंदादिके याम्यजलोत्तराननेष्

[ अन्वयः ] मृत्युसुतार्थलाभतः पंचमे अर्के क्रमेण प्राग्वदनादिमन्दिरे गृह प्रवेशकर्तुर्वामो रविर्ज्ञेयः । पूर्णातिथौ प्राग्वदने गृहे गृह प्रवेशः शुभः नन्दादिके याम्यजलोत्तराननें गृहे प्रवेशः शुभदः स्यादिति ॥ ५ ॥

अर्थः-प्रवेश लग्न से आठवें पांचवें दूसरे ग्यारहवें स्थानों से पांच मे राशि में सूर्य हो तो पूर्वादि मुख वाले स्थानों में क्रम से वाम रवि होता है । पंचमी

पौर्णमासी तिथियों में पूर्व के मुख वाले मकानमें प्रवेश करना शुभ है। प्रतिपदा छट एकादशी में दक्षिण मुख वाले मकान में, तीज अष्टमी तेरस में उत्तरमुख वाले मकान में प्रवेश करना अति शुभ है ॥ ५ ॥

गृहप्रवेश में कलशवास्तुचक्र--

वक्त्रे भूरविभात्प्रवेशसमये कुंभेऽग्निदाहः कृताः
प्राच्यामुद्वसनं कृता यमगता लाभः कृताः पश्चिमे ।
श्रीवेदाः कलिरुत्तरे युगमिता गर्भे विनाशो गुदे
रामाः स्थैर्यमतः स्थिरत्वमनलाः कंठे भवेत्सर्वदा ॥ ६ ॥

[अन्वयः] समये कुम्भे कलशचक्रे रविभात्सूर्यनक्षत्रात् वक्त्रे मुखे भूरेकं तत्फलं गृहस्याग्निदाहः। ततः कृताः प्राच्यामुद्वसनं, ततः कृता यमगता लाभः ततः कृता पश्चिमे श्रीप्राप्ति ततो वेदा उत्तरे कलिः, ततो रामाः गुदे स्थैर्यम् ततोऽनला कण्ठे सर्वदा स्थिरत्वं भवेत् ॥ ६ ॥

अर्थ-गृहप्रवेश समय में कलश के मुखमें सूर्य नक्षत्र स्थित करे यदि इसी नक्षत्र में वेश करे तो घर में अग्नि लगे फिर चार ४ नक्षत्र पूर्व दिशा में स्थापित करे इनमें प्रवेश हो तो मकान सूना रहे। फिर चार नक्षत्र दक्षिण में स्थापित करे उनमें द्रव्य मिले। फिर चार ४ नक्षत्र पश्चिम में स्थित करै उनमें लक्ष्मी प्राप्त होय। फिर चार नक्षत्र उत्तर में स्थापित करै उनमें प्रवेश हो तो मकान में लड़ाई लगी रहै। फिर चार ४ नक्षत्र कलश के मध्य में स्थापित करे उनमें प्रवेश करै तो स्वामी का नाश होवै और तीन ३ नक्षत्र कलश के तलमे स्थापित करै उनमें प्रवेश हो तो गृहस्वामी सदैव स्थित रहे। फिर तीन ३ नक्षत्र कलश के कंठ में स्थापित करै उन में प्रवेश हो तो घरके स्वामी की सदैव स्थिति रहै ॥ ६ ॥

गृहप्रवेशके पीछे कर्तव्य--

एवं सुलग्ने स्वगृहं प्रविश्य वितानपुष्पश्रुतिघोषयुक्तम् ।
शिल्पज्ञदैवज्ञविधिज्ञपौरान् राजार्चयेद्भूमिहिरण्यवस्त्रैः ॥७॥

इति मुहूर्त्तचिन्तामणौ गृहप्रवेशप्रकरणम् समाप्तम् ।

[अन्वयः] एवं सुलग्ने राजा वितानपुष्प श्रुतिघोषयुक्तं स्वगृहं प्रविश्य शिल्प शदैवज्ञविधिज्ञपौरान् भूमिहिरण्यवस्त्रैः अर्चयेत् पूज्येत् ॥ ७ ॥

अर्थः-ऐसे सुन्दर लग्न में सुन्दर २ वस्त्रोंके चंदवा मंडप बनवावै और चमेली इत्यादि पुष्पोंसे सुशोभित करके वेदध्वनि से युक्त अपने मकान में प्रवेश करे। मकान बनाने वाले को ज्योतिषी आचार्य और श्रेष्ठपुरवासियों को राजा विधिवत् पृथ्वी, सुवर्ण, वस्त्र, सवारी इत्यादि से पूजन करे और नृत्य गान आदि मांगलिक शब्द श्रवण करे ॥ ७ ॥

# ग्रंथकारप्रशस्तिः ।



आसीद्धर्मपुरे षडंगनिगमाध्येतृद्विजैर्मंडिते ।
ज्योतिर्वित्तिलकः फणींद्ररचिते भाष्ये कृतातिश्रमः ।
तत्तज्जातकसंहितागणितकृन्मान्यो महाभूभुजां
तर्कालंकृतिवेदवाक्यविलसद्बुद्धिः स चिंतामणिः॥१॥

[अन्वयः] प्रसिद्धः चिन्तामणिः मम पुरे आसीत् कीदृशे पुरे षडंगनिगमाध्ये मद्विजैर्मण्डिते ज्योतिर्वित्तिलकः फणींद्ररचिते भाष्ये कृतातिश्रमः तत्तज्जातक संहितागणित कृत् महाभूभुजां मान्यः तर्कालंकृतिवेदवाक्य विलसद् बुद्धिः सरचिन्तामणि आसीत् ॥ १ ॥

अर्थः-शिक्षा आदि छ अंगों सहित वेद के पढ़ने वाले पंडितों से सुशोभित ज्योतिषियों में श्रेष्ठ शेष नाग के बनाए हुए महाभाष्य में अत्यन्त अभ्यास वाले अनेक जातक शास्त्र, संहिता शास्त्र, गणित शास्त्र, इनका करने वाले बड़े २ राजा लोगों के मान्य और न्याय अलंकार मीमांसा वेदान्तादि शास्त्रों में कुशल उत्तम बुद्धि वाले पंडित चिन्तामणि नामक धर्मपुर में हुए ॥ १ ॥

ज्योतिर्विद्गणवंदितांघ्रिकमलस्तत्सूनुरासीत्कृती
नाम्नाऽनंत इति प्रथामधिगतो भूमंडलाहरकरः ।

योरम्यां जनिपद्धतिं समकरोद्दुष्टाशयध्वंसिनीं
टीकां चोत्तमकाधेनुगणितेऽकार्षीत्सतां प्रीतये ॥ २ ॥

[अन्वयः] तत्सूनुः तस्य चिन्तामणिदैवज्ञस्य सूनुः पुत्रोऽनन्त इति नाम्ना प्रथां ख्यातिं अधिगतः प्राप्त आसीत् कीदृशानन्तः ज्योतिर्विद्गणवन्दिताङ्घ्रिकमलः पुनः कीदृशः भूमण्डलाहस्करः। पुनः कीदृशः कृती कुशलः योऽनन्तः जनिपद्धतिरम्यां समकरोः सम्यक चकार। कीदृशीं जनिपद्धतिं दुष्टाशयध्वंसिनीं। किं च तं उत्तमकामधेनुगणिते टीकां सतां प्रीतये अकार्षीत् ॥ २ ॥

अर्थ-उन्ही चिन्तामणि के पुत्र ज्योतिष वेत्ताओं समूह करके प्रणमित चरण कमल वाले, भूमण्डल में सूर्यरूप, अनेक ग्रन्थों की रचना में कुशल अनन्त नाम से प्रसिद्ध हुए। जिन अनन्त ने दुष्टाशयों के नाश करने वाली अति मनोहर पद्धति निर्मित की उन्ही अनंत ने कामधेनु नामक गणित पथ पर अति मनोहर टीका निर्माण की ॥ २ ॥

ग्रंथकार प्रशंसा—

तदात्मज उदारधीर्विबुधनीलकंठानुजो
गणेशपदपंकजं हृदि निधाय रामाभिधः।
गिरीशनगरे वरे भुजभुजेषुचंद्रै (१५२२) र्मिते
शके विनिरमादिमं खलु मुहूर्तचिंतामणिम् ॥ ३ ॥

[अन्वयः] तदात्मजः तस्यानन्तज्योतिर्विदे आत्मजः पुत्रो रामाभिधो रामसंज्ञकः गिरीशनगरे वरे मुहूर्त्तचिन्तामणिनामकं ज्यौतिषग्रंथमिमं निरमात् अकार्षीत् कीदृशो रामाभिधः, उदारधी विबुध नीलकंठानुजो गणेशपद पंकजं हृदि निधाय भुजभुजेषुचन्द्रैर्मिते शके मुहूर्तचिन्तामणिं व्यधात् ॥ ३ ॥

अर्थः-अनन्त नामक ज्योतिर्वित् का पुत्र उदार बुद्धिवाला पं० नीलकंठ का भाई राम कुलपूज्य श्रीगणपति को हृदय में स्थापन कर अत्युत्तम काशी धाम में १५२२ शालिवाहन शाके में इस मुहूर्त्त चिन्तामणि नामक ग्रन्थ का अति परिश्रम से निर्माण किया ॥ ३ ॥

इति मुहूर्तचिन्तामणौ भाषा-टीका समाप्ता।